॥ श्रीरस्तु ॥

# मेघप्रतिसन्देशः

महाकवि श्रीकालिदासकृत मेघसन्देशोक्त यक्षसन्देश वचनानुरूप
यक्षीप्रत्युत्तररूपः

अयंग्रन्थः
सहृदयहृदयाह्लादनाय
श्रीमन्महीशूरमहाराजाऽऽस्थानकविरत्नेन

## मण्डिकल् रामशास्त्रिणा

विरचितः

—:o:—

महीशूरपुर्यां
स्वकृत व्याख्यया सह
श्री जयाल्यारूय मुद्राऽऽलये मुद्रितस्सन् विजयतेतराम्
१९२३



[Price As. 12.] [ मूल्यं द्वादशकलाः ]

# विज्ञापना ।

अथ तत्रभवान् कविकुलसार्वभौमः कालिदासोनाम महाकविः सहृदयहृदयाऽऽह्लादनाय विप्रलम्भशृङ्गारं विवेदयिषुः वैश्रवणानुचरस्य कस्यचिद्यक्षस्य शापमूलकं विप्रयोगं परिकल्प्य विदूरस्थेन तेन स्वप्रियां प्रति मेघदूतमुखेन स्वसन्देशो निवेदित इतीतिवृत्तं निबध्नन् मधुरमधुरं मेघसन्देशाख्यं काव्यमातानीत् । तत्र च मध्ये—

" साभिज्ञानं प्रहितकुशलैः तद्वचोभिर्ममापि ।
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ "

इति यक्षेण मेघं प्रति स्वप्रेयसीप्रत्युत्तरानयनं प्रार्थितमिति प्रतिपादनात् कवेः प्रत्युत्तरावबोधककाव्यकल्पनमभिमतमिति स्पष्टं प्रतीयते । तादृशश्च प्रबन्धो न कश्चिदप्युपलभ्यते । अतस्तमिमं सन्दर्भमालोच्य महीशूरमहाराजास्थानमहाविद्वान् आस्थानकविरत्नविरुदाङ्कितश्च मण्डिकल्रामशास्त्रिवर्मा कविः मेघप्रतिसन्देशाख्यं काव्यमररचत् ।

इदं च काव्यं सर्गद्वयात्मकं परिदृश्यते । तत्र च अष्टषष्ट्या पद्यैः परिशोभिते प्रथमसर्गे विरहविह्वला यक्षवधूः मेघराजात्स्वप्रियसन्देशमाकर्ण्य प्रहृष्टान्तरङ्गा मेघमनुनीय तन्मुखेनैव पुनः प्रियं प्रति स्वसन्देशं प्रेषयिष्यन्ती स्वावस्थां स्वगृहावस्थां च निवेद्य वाग्रूपाभिज्ञानप्रदानव्याजेन वैश्रवणदत्तशापप्रकारं तत्परिहारक्रममप्यवबोधयन्ती सद्यः प्रियाऽऽगमनमर्थयामासेति वस्तु न्यबध्यत ॥

ततश्च षण्णवत्या पद्यैः परिशोभिते द्वितीयसर्गे द्रष्टव्यवस्तुकथनादिभिः मेघमभिमुखीकृत्य तस्य शीघ्रगमनार्थमलकामारभ्य रामगिरिपर्यन्तं ततस्तत्र भर्तुर्विरहचापलाद्देशान्तरगमनमाशङ्क्य तदादि धनुष्कोटिपर्यन्तं च ऋजुमार्गं प्रदर्शयन्ती मध्येमध्ये वनगिरिसरि-

तीर्थपुण्यपुरक्षेत्रदेवतायतनानि निर्दिश्य तत्तत्स्वभाववैभववर्णनपूर्वकं प्रोत्साह्य स्वप्रियानयनाय मेघं प्रास्थापयदित्यादिप्रतिपाद्यार्थः प्रकाशितः ॥

अस्यां कृतौ कविर्मेघसन्देशानभिहितमपि यक्षदम्पत्योर्नामधेयं यक्षीयमधिकारं धनपतिक्रोधकारणं तच्छापप्रकारं च चारुतरेण सन्दर्भेण प्राकाशयदिति प्रमोदावहमेतत् ॥

सैषा कृतिः मृदुलैः पदविन्यासैः मधुरैरर्थगुम्भनैः उचितैर्विभावानुभावादिभिः अनुरूपैर्गुणालङ्कारैः गाम्भीर्यसौकुमार्यसम्पूर्णया वैदर्भ्या वृत्त्या च प्रायशस्सर्वत्र स्वभावोक्तिमेव पुरस्कृत्य कालिदासशैलीमेवानुसरन्ती स्वोत्पादकस्य कवेः साङ्गसाहितीवैदग्धीमभिव्यञ्जयन्ती च सती सहृदयहृदयैकवेद्यमाह्लादमापादयतीति गुणज्ञाः विद्वांसो विदाङ्कुर्वन्तु ॥

किञ्चात्र यक्षीप्रतिसन्देशे अतात्कालिकानां श्रीशङ्कराचार्यश्रीरामानुजाचार्य-श्रीव्यासराजाचार्यादीनां श्रीविजयनगराधीशमहीशूरमहाराजादीनां विद्युद्दीपादिनवीनशिल्पानां च वर्णनमस्ति । तदेतत्तात्कालिक-प्रमुषितवृत्तान्तकल्पनापेक्षया प्रत्यक्षसिद्धेदानीन्तनवृत्तान्तो वर्णितश्चेत् श्रोतृजनसुखानुभवाय भवेदित्यभिप्रायेण व्यलेखि। सम्मतश्चैतादृशः पन्थाः कवीनां भूतभाव्यर्थप्रत्यक्षवर्णनमनुमन्यमानानां तिर्यक्तरुपाषाणादिष्वपि वाग्वैखरीमभिवर्णयतां च। तस्मादिदानीन्तनवृत्तान्तवर्णनमप्यत्र मनोज्ञमेव प्रतिभाति ॥

स एष मेघप्रतिसन्देशकर्ता कविः रसिकजनसन्निधौ स्वाभिप्रायं स्वयमेव किञ्चिद्विज्ञापयितुं स्वग्रन्थस्य स्वयमेव भावबोधाख्यां व्याख्यां विलिख्य प्राकाशयदित्येतदप्यनुगुणमेव ॥

एतद्ग्रन्थपठनेन बालानां अर्थान्तरन्यासविधया लोकनीतयः, तत्तद्देशस्वरूपाववोधनानि, सदसत्स्वरूपपरिज्ञानानि, सुगुणदुर्गुणफ-

लानि, परानुवर्तनचातुर्याणि, कालोचितवचनरचनापरिपाटी परिज्ञानादीनि च प्रयोजनानि ज्ञायन्त इति सहृदयैराकलनीयम् ॥

अत्रैव सङ्क्षेपेण किञ्चिदेतत्कविचरितमुच्यते—

सोऽयं मण्डिकल्रामशास्त्रिशर्मा कविः १८४९ आङ्ग्लवत्सरे महीशूरदेशान्तर्गते मण्डिकल्नाम्नि नगरे रथीतरगोत्रोद्भवस्य अप्पसामिज्यौतिषिकस्य पुत्रात् वेङ्कटसुब्बाशास्त्रिशर्मणो विबुधादक्कणाम्बागर्भसम्भूतस्सप्तमे वर्षे श्रीसुब्रह्मण्यक्षेत्रे पित्रा समुपनीय महीशूरपुर्यां ऋग्वेदाध्ययनार्थं द्विवेदिगुरुगृहे विसृष्टः। तत्र सब्रह्मचारिभिस्सह वेदमधीयानष्षोडशे वर्षे पितृवियोगमाकर्ण्य स्वजन्मनगरमयासीत्। तत्र वेङ्कटरामाचार्यनामकगुरुसन्निधौ काव्यचम्पूनाटकानि वर्षचतुष्टयमधीत्योत्तरदेशं गत्वा तत्तद्गुरुवरानुग्रहात्तर्कव्याकरणप्रकरणग्रन्थानधीयानः पुनरपि महीशूरपुरीमगात्। तत्र वक्षीनरसप्पनाम्ना महाशयेन स्वगृहे पुत्रनिर्विशेषं परिपोष्यमाणः पण्डिततरलसीतारामशास्त्रिगुरुसन्निधौ गदाधरीयपञ्चवादान् अलङ्कारशास्त्रे सर्वान् ग्रन्थानप्यधीत्य श्रीमन्महीशूरमहाराजसंस्कृतमहापाठशालायां प्राथमिकसाहित्यविद्वत्परीक्षामुत्तीर्णोऽभूत् (१८८५ आङ्ग्लवर्षे अथ वक्षीनरसप्पनाम्ना प्रतिष्ठापितायां शारदाविलासाख्यसंस्कृतपाठशालायां चिरमध्यक्षपदवीमधिष्ठाय परश्शतान् शिष्यान् पण्डितानतानीत्। ततश्रीशृङ्गेरीजगद्गुरुशिवाभिनवसच्चिदानन्दभारतीगुरुचरणसन्निधौ प्रस्थानत्रयभाष्यशान्तिमातन्वन्नार्यधर्मप्रकाशिकाख्यां कर्मकाण्डज्ञानकाण्डबोधिनीं कृतिमारचयत्। तदालोकनपरितुष्टेन म्याक्स्मुल्लर् नामकपण्डितप्रवरेणान्यैश्च महापण्डितैः प्रदत्तास्संमानपत्रिकास्तां कृतिं चामराजकल्याणचम्पूं चामराजराज्याभिषेकचरितं कृष्णराजाभ्युदयादि राजगृहमहोत्सवाभिवर्णनग्रन्थांश्च समालोक्य सन्तुष्टेन श्रीमता चामराजेन्द्रेण बहुधा सममान्यत। ततो भैमीपरिणयाख्यं नलचरित्रावबोधकं साङ्गं नाट-

कमारचय्य तदालोकनसन्तुष्टेन श्रीमता नाल्वडिकृष्णराजसार्वभौमेण महाविद्वानास्थानकविरत्नमिति सभायां नामोपाधिमनुगृह्य सरत्नकटकालङ्कारप्रदानपूर्वकं गृहारामाग्रहारप्रदानपूर्वकं च सम्मान्य महाराजाकालेज्नामक महाविद्यापीठे संस्कृतप्रथमपण्डितपदवीमारोप्यत अयं महाभागः ॥

ततः कुम्भाभिषेकचम्पूप्रबन्धरचनेन परितोषितैः श्रीशृङ्गेरीजगद्गुरुचन्द्रशेखरभारतीगुरुवर्यैः कविकुलालङ्कार इति, श्रीमदुत्तरादिमठाधिपति श्रीसत्यध्यानतीर्थगुरुवर्यैः कविशिरोमणिरिति, गरलपुरस्थितश्रीराघवेन्द्रमठाधिपतिश्रीसुशीलेन्द्रयतिवर्यैः सरसकविकुलकण्ठीरव इति, श्रीशिवगङ्गामठाधिपतिभिः श्रीसुब्रह्मण्याभिनवसच्चिदानन्दभारतीगुरुवरणैः शारदाप्रतिष्ठामहोत्सवे कविकुलावतंसइति, श्रीकाशीक्षेत्रस्थित श्रीभारतधर्ममहामण्डलाध्यक्षैः कविविभूषण इति च नामोपाधिभिस्सम्मानितोऽभूदेष महानुभावः ॥

इदानीमयं कविरुसरे वयसि वर्तमानः षड्भिः पुत्रैः सप्तभिर्दुहितृभिः सुशीलया रुक्मिणीनामधारिण्या सहधर्मचारिण्या च संसेव्यमानः सुखं विजयते ॥

अद्याप्यस्मिन् भुवनवलये विद्यते क्वापि कश्चि-
द्वाचांदेवीनिरवधिकृपापात्रभूतः कवीन्द्रः ।
ज्ञात्वा सम्यक् सरलकवितां स्वादयन् सावधानं
यःप्रोत्साही भवति स महान् क्वास्ति वा नैव जाने ॥

अस्मद्गुरोरस्य कवेः देशान्तरसञ्चारचरित्रादिकमन्यत्र ग्रन्थे निवेदयिष्याम इति शिवम् ।

मोक्षकुण्डं लक्ष्मीपतिशर्मा बि. ए.,
अनुभूतमहाराज संस्कृतमहापाठशाला-
प्रिन्सिपल्नामकाधिकारः ॥

# INTRODUCTION.

---o---

It is well-known that with a view to please the aesthete by a poetical description of the anguish of love of a loving couple separated from each other, Kalidasa, the best and greatest of the Indian poets hit at the separation from his beloved wife of an imaginary Yaksha, due to banishment by Vaisravana, god of wealth and his master, and, thinking of a pathetic love-message he sent through a cloud-messenger to her, produced an exquisite piece of lyric, the equal of which in sweet diction and vivid description of the pangs of love is hardly met with anywhere in Sanskrit literature.

It appears from the appeal made by the Yaksha to the cloud to fetch her own words in reply together with a token of identity and thereby sustain his own life which in the words of Kalidasa is "as frail as a fresh *Kunda* flower in the early morning", that a reply from the Yaksha's wife was intended to form part of the lyric. But the lyric, as it is, contains no such thing. Hence the present endeavour towards its completion under the title of "Meghapratisandesa" by our poet, Mandikal Ramasastri, Asthana Kaviratnam, 'Gem of poets' in the Darbar of His Highness the Maharaja of Mysore.

This piece like its model consists of two cantos. With the sixty-eight verses making the first canto, the poet describes how the wife of the yaksha, anguishing with the throes of love, is delighted to hear the

message brought by the *cloud* from her beloved husband, how through the same messenger she sent her reply descriptive of the condition of herself and of her household, and how as a mark of recognition of the reply as her own, she related the nature of the curse of banishment and the way of getting rid of it. In the second canto containing ninety-six verses the poet draws a vivid picture of the various scenes, forests, mountains, rivers, lakes, cities, temples, and other sacred places which the cloud will have to pass on his way from Alaka to Ramagiri and down to Dhanushkoti, whither she imagines her lover to have repaired in order to escape from the pangs of separation.

Among the new devices made by the poet in his work is what relates to the Yaksha's private life, his and his wife's names, the nature of his office, the cause of displeasure of Vaisravana, the form of the curse, and the way to get out of it.

The influence of modern culture in science and philosophy over our poet has been so great that he could not avoid the insertion of some anachronisms in the work in preference to the description of faint and almost forgotten recollections of what obtained in ancient society. Nor is it a rigid rule that like history poetry should also be free from anachronisms. It has been usual with poets, both ancient and modern, to give free play to their imagination in describing past, present and future events and to infringe nature's laws by attributing animate functions to inanimate nature. Thus in connection with the reply of the Yaksha's wife the poet's

description of some incidents in the lives of Sri Sankaracharya, Sri Ramanujacharya, Sri Vyasarajacharya, and other religious reformers, of the emperors of Vijayanagar, and of the kings of Mysore, and of electric light and other wonders of modern science, is believed to add to the beauty of the work.

The chief aim which the poet kept in view throughout the work is to follow Kalidasa as far as possible in his style, diction, figure of speech and flavour with vivid and picturesque description of man and nature with no trace of exaggeration. How far he has succeeded in this difficult task is what may be better left to the impartial reader for dicision.

With a view to explain his own meaning the poet has added his own commentary on the verses. It is hoped that the moral lessons and proverbial sayings incorporated here and there in this work, the picturesque description of persons and places, and the contrasting touches drawn between good and bad conduct together with their consequences, cannot merely afford the reader an interesting reading but also help him to cultivate the power of sweet conversation and learn the art of pleasing others.

It may not be out of place to conclude the introduction with a brief sketch of the poet's life.

Rama, now Ramasastri, Kaviratna, was born in 1849, in the village called Mandikal in the Taluk of Chickballapur in the district of Kolar. Venkatasubbasastri, his father, was the son of Appasami Jois of Rathitara-gotra. His mother was known as Akkay

name. In his eighth year he was invested with the Brahmanic sacred string in Subrahmanya and was entrusted to the care of Dvivedi in Mysore for his training in the RigVeda. There he continued to learn the Rigveda till his sixteenth year when on the death of his father he was obliged to return home. In his own native place he studied sanskrit literature under Venkataramacharya for four years. Then going to northern India he studied sanskrit grammar and logic under various teachers. Then he returned to Mysore and living under the care of Bakshi Narasappa, Palace Controller of His Highness the Maharaja Krishna Raja Wodeyar III, he studied logic and rhetoric under Panditaratnam Sitaramasastri. He passed his Sanskrit vidvat Examination in the very year it was first instructed—from the Maharaja's Sanskrit College, Mysore. Then he was appointed adhyaskha of a Sanskrit School established by Bakshi Narasappa at his own cost. He continued as the adhyaskha of this School and trained a number of Sanskrti Pandits.

Having been initated in the secrets of the Advaita-philosophy by His Holiness Sri Sivabhinava Sachchidananda Bharati Guru of Sringeri, he wrote his Arya-dharma-prakasika which received unstinted praises from Prof. Maxmüller, then alive, and for which he was liberally rewarded by H. H. the late Chamaraja Wodeyar.

In 1914, he wrote a drama in Sanskirt entitled Bhaimiparinaya, in recognition of the merits of which H. H. Krishna Raja Wodeyar IV. bestowed on him the title of Kaviratna.

In 1899 he left the Sanskrit School of Bakshi Narasappa and was appointed as Pandit in the Maharaja's Collge, Mysore.

In appreciation of his Kumbhabhisheka-champu, the Sringeri Jagadguru bestowed on him the title of " Kavikulalankara ", and Satyadhyana Tirtha-guru of Uttaradi Math, " Kavisiromani ", the Susilendra Guru of Raghavendra Muth in Nanjungud, " Sarasa-kavikula kanthirava", Sri Subrahmanyabhinava Sachchidananda bharati Guru of Sivaganga Math, " Kavikula-vatamsa " and the Bharat-Dharma Mandala of Kasi, " Kavi-vibhushana ".

The poet is now old and yet maintaining good health and strength under the care of his devoted wife, Rukminiamba, continues his poetical activities in the midst of six sons and seven daughters.

There may be, I believe, even now somewhere in this world some poet who is come under the limitless good grace of the Muse. But I know not whether there is one who is magnanimous enough to thoroughly comphrehend and enjoy at leisure the beauties of elegant poetry and so enthusiastic as to infuse love of poetry in others.

I conclude this short introduction by announcing that as a grateful student of the poet I propose to give adetailed account of the poet's works and of travels in a separate biographical work under my contemplation.

*R. Shamasastry.*

# विषयसूचिनी ॥

## — प्रथमसर्गे —

मेघेन यक्षसन्देशकथनं प्रथमे पद्ये ॥



## — द्वितीयसर्गे —

# AUTHOR'S NOTE.

In submitting this humble work to the public, I have to acknowledge with profound gratitude not only the sympathetic encouragement but also the pecuniary aid that the Mysore University, of which His Highness Maharaja Sri Krishnaraja wadeyar Bahadur, is the illustrious Chancellor, has been pleased to give me. I value still more their generous appreciation of my labours. And I entertain the hope that other Indian Universities and Sovereigns will be like-wise pleased to accord similar encouragement to me in my endeavour to place this little book within the reach of all the Sanskrit-loving people of this country.

MANDIKAL RAMASASTRI,

*Palace Mahavidwan*
*and Asthana Kavirathnam.*

CHAMARAJA AGRAHAR
MYSORE,
6TH MARCH 1923.

॥ श्रीरस्तु ॥

# * मेघप्रतिसन्देशः *

## ॥ प्रथमस्सर्गः ॥

यक्षेणैवं विरहविधुरेणार्थितस्तोयवाहः ।
तीर्त्वा मार्गान् सरयमलकामेत्य वात्यारथेन ॥
तत्प्रेयस्यै प्रियनिगदितं सर्वमप्याचचक्षे ।
लोके सन्तो न हि खलु परप्रार्थनां व्यर्थयन्ति ॥ १ ॥

— * व्याख्यानप्रारम्भः * —

सकलागमसन्दोहस्वर्णसम्पुटमौक्तिकम् ।
गिरिजामातरं नत्वा गिरिजामातरं नुमः ॥
कृतनवरसावतारं परमात्मानं प्रणम्य कुतुकेन ।
मेघप्रतिसन्देशव्याख्यामारप्स्यामि भावबोधाख्याम् ॥

रसिकजनरञ्जनार्थं निजहृदयार्थप्रकाशनार्थं च ।
मेघप्रतिसन्देशं स्वकृतं विवृणोमि सरससन्दर्भैः ॥

इहखलु मण्डिकल् रामशास्त्रिशर्मा सरसकविः गुरुमुखादवगतं सकलकलाकलापं सहृदयहृदयाह्लादनेन सफलयन् मेघप्रतिसन्देशाख्यं काव्यं चिकीर्षुः "काव्यालापांश्च वर्जयेत्" इति निषेधस्यासत्काव्यपरतामवगमयन् स्वचिकीर्षितस्य निर्विघ्नपरिसमाप्तये मङ्गलमाचरय्य शिष्टाचारमनुपालयंश्च प्रबन्धमुखे आशीराद्यन्यतमं वस्तु निर्दिशति यक्षेणेति ॥

विरहविधुरेण स्वकान्तावियोगविह्वलेन यक्षेण मेघसन्देशकथानायकत्वेन कालिदासमहाकविनिर्दिष्टेन वक्ष्यमाणचित्रग्रीवनाम्ना केनचिद्यक्षयूना कर्त्रा, एवमर्थितः "गन्तव्याते वसतिरलकानाम यक्षेश्वराणां" "सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य" "मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं" "किञ्चिद्व्रज लघुगति भूयएवोत्तरेण" "तां जानीथाः परिमितकथां जीवितं मे द्वितीयं" "वक्तुं धीरस्तनितवचनै र्मानिनीं प्रक्रमेथाः" "साभिज्ञानं प्रहितकुशलैस्तद्वचोभिर्ममापि प्रातःकुन्दप्रसवशिथिलंजीवितं धारयेथाः" इत्यादिप्रकारेण प्रार्थितस्तोयवाहो मेघः तोयवाह इत्यादिस्वभावद्योतनाभिप्रायकं विशेष्यम् । अतएव परिकराङ्कुरालङ्कारः "साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः" इति तल्लक्षणात् । वातानां समूहो वात्या पाशादिभ्योय इति यप्रत्ययः । सैव रथस्तेन मेघानां वायुनेयत्वात् रथत्वारोपः । सरयं सवेगं अलकामेत्य अलकापुरीं प्राप्य तस्य यक्षस्य या प्रेयसी वक्ष्यमाणरत्नमालाख्या तस्यै प्रियेण तन्नाथेन यक्षेण यन्निगदितं संदिष्टंवचनं तत्सर्वमपि समस्तमपि अपिस्समुच्चये एवञ्च "नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे तत्कल्याणि त्वमपि नितरां मागमः कातरत्वं" "शेषान् मासान् गमय चतुरो लोचने मीलयित्वा" "एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा मा कौलीनादसितनयने मय्यविश्वासिनी भूः" इत्यादि सन्देशजालं सकलमपि आचचक्षे कथयांचक्रे । अत्र कविरर्थान्तरं न्यस्यति लोकइति । लोकेऽस्मिन् परस्परसहायसंवर्धिते प्रपञ्चे सन्तस्सज्जनाः परेषामसहायिनामर्थिनां प्रार्थनां याचनां न व्यर्थयन्ति न निष्फलयन्ति किन्तु सफलयन्त्येवेति साधर्म्ये पर्यवसानं । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासोऽलङ्कारः "उक्तिरर्थान्तरन्यास स्स्यात्सामान्यविशेषयोः" इति तल्लक्षणात् । तेन च ये परप्रार्थनां न व्यर्थयेति तएव सज्जनाइति ज्ञेयं इत्यत्रगम्यते एवंचात्र स्वप्रियाविरहदुःखितेन यक्षेण प्रार्थितो

मेघराजः श्वसनानुनीयमानो मार्गानतीत्यालकामेत्य तत्प्रियतमायै प्रियोक्त-मावेदयामासेति प्रकृतवस्तुनिर्देशेन सीताविरहतप्तेन श्रीरामेण प्रार्थितो हनूमान् वायुसहायेन लङ्कामासाद्य सीतायै रामोदितमखिलं सन्देश माचचक्ष इत्यर्थान्तरमपि व्यज्यते। अत्र रसभावालङ्कारगुणदोषादि विशेषास्तु सुधी-भिरुन्नेयाः। अस्मिन् ग्रन्थे मन्दाक्रान्तावृत्तं। मन्दाक्रांता जलधिषडगैर्म्भौ नतौ गुरू चेदिति लक्षणात् ॥

कान्तोदन्ते श्रवणपतिते सम्भ्रमस्फारिताक्षी।
यक्षी साक्षात्प्रियमुपनतं मन्यमाना क्षणार्धे ॥
स्मृत्वा शापं नखमणिमुखैर्बाष्पमुन्मार्जयन्ती।
प्रेयोदूतं पवनचलितं वारिवाहं ददर्श ॥ २ ॥

अथ तद्यक्षप्रियावृत्तान्तमाह कान्तेति। कान्तस्य स्वप्राणनाथस्य वृत्तान्ते प्रवृत्तौ श्रवणपतिते श्रुतमात्रेसति सम्भ्रमेण त्वराविशेषेण स्फारिते विशालीकृते अक्षिणी नयने यस्यास्तादृशी एतेनादरातिशयो व्यज्यते अक्ष्णोस्स्वाङ्गवाचित्वात् स्वाङ्गात् षजिति षच्प्रत्ययः। षिद्गौरादिभ्यश्चेति ङीष्। यक्षस्यस्त्री यक्षी कर्त्री पुंयोगादाख्यायामिति ङीप् प्रियं प्राणनाथं साक्षादभिमुखमुपनतमायातं मन्यमाना जानती, “कान्तोदन्तस्सुहृदुपनतस्सङ्गमात्किञ्चिदूनः” इति न्यायादितिभावः। एवञ्च कान्तोदन्तश्रवणमात्रादेव क्षणं तद्दर्शनजनितानन्दावस्थामनुभवन्तीसतीति यावत्। क्षणार्धे तादृशावस्थानुभवान्यवहितक्षणार्धे शापं वैश्रवणदत्तं स्मृत्वा मनसि समालोच्य नखमणिमुखैः स्वसौन्दर्यानुरूपरत्नसदृशनखाग्रैः बाष्पमश्रून्मार्जयन्त्युत्किरन्तीसती शापस्यातिदुःखकरत्वादितिभावः। प्रेयसः प्राणकान्तस्य दूतं वार्ताहरं पवनचलितं वाताहत्यादोलायमानं वारिवाहं मेघं ‘अभ्रं मेघो वारिवाह’ इत्यमरः। ददर्श सादरं प्रेक्षाञ्चक्रे। अत्र वारिवाहदर्शने बाष्पोन्मार्जनाक्षिप्तस्य मुखोन्नमनस्य हेतुत्व-

कल्पनात्काव्यलिङ्गमलङ्कारः। दुःखकाले नखमुखैर्बाष्पोन्मार्जनादेः स्त्रीणां स्वाभाविकत्वात् स्वभावोक्तिश्च, "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्" "स्वभावोक्ति स्स्वभावस्य जात्यादिस्थस्य वर्णनं" इति तत्तल्लक्षणात्। किञ्चात्र आनन्दभावोदयस्य तद्विरुद्धशोकभावोदयस्य च वर्णितत्वाद्भावप्रधानमिदं पद्यम् ॥

ध्यायंध्यायं किमपि हृदये श्वासमुष्णं सृजन्ती।
स्मारंस्मारं प्रियबहुमतिं सम्मदाश्रु क्षिपन्ती ॥
चिन्ताधीनं सपदि हृदयं किञ्चिदाश्वासयन्ती।
भूयोभूयः कुशलमबला भावयामास भर्तुः ॥ ३ ॥

अनन्तरवृत्तान्तमाह ध्यायंध्यायमिति। अबला किमपि कर्तुमसमर्था यक्षवधूः हृदयेस्वमनसि किमप्यनिर्वचनीयं दैविकं मानुषं च परिभवादिकं ध्यात्वाध्यात्वा ध्यायंध्यायं आभीक्ष्ण्ये णमुल् उष्णं श्वासं सृजन्त्युत्सृजन्ती-सती पूर्वदुःखस्मरणादितिभावः। प्रियस्य बहुमतिं सन्देशप्रेषणरूपां स्मृत्वा-स्मृत्वा स्मारंस्मारं पूर्ववण्णमुल् सम्मदाश्रु प्रमोदाश्रु क्षिपन्त्युद्गिरन्ती सती प्रियानुरागप्रत्ययादितिभावः। चिन्ताधीनं प्रियःप्रेक्ष्येत वा नवा जीवतिवा नवेत्यालोचनापरवशं मनः किञ्चिन्मनागाश्वासयन्ती च सती भूयोभूयः पुनःपुनर्भर्तुः स्वजीवितोद्धारकस्य कुशलं क्षेमेणास्तित्वरूपं भावयामास मनसा सन्दध्यौ कविनापि अत्र सौशब्द्य मौचित्य मर्थगाम्भीर्यञ्च दर्शितमिति ध्येयम् ॥

उत्तिष्ठन्ती तदनु शनकैः पाणिनालम्ब्य भूमिं।
स्रस्तंस्रस्तं कनकवलयं बाहुमूलं नयन्ती ॥
भर्तुर्बन्धोरभिमुखमसौ वेश्मवातायनस्था।
मन्दंमन्दं मधुरमधुरं प्राञ्जलिर्वाचमूचे ॥ ४ ॥

तदनन्तरवृत्तान्तमाह उत्तिष्ठन्तीति । तदनु प्राणेशास्तित्वनिश्चयानन्तरं असौ यक्षी प्राणिना भूमिमालम्ब्य शनकैर्मन्दमुत्तिष्ठन्ती सती विरहजनितदौर्बल्या-दितिभावः स्रस्तंस्रस्तं बाहुमूलात्पुनःपुनश्च्युतं वियोगप्रयुक्तकार्श्यादिति-भावः। कनकवलयं बाहोस्स्वभुजस्य मूलं ऊर्ध्वभागं नयन्ती प्रापयन्ती च स-ती प्रकोष्ठापेक्षया बाहुमूलस्य किञ्चित्स्थूलत्वात्तत्र दृढं लगेदित्याशयेतिभावः। भर्तुर्बन्धोः स्वप्राणनाथमित्रस्य नतु परस्य मुखमभि अभिमुखं अभिरभाग इति-कर्मप्रवचनीयत्वं तत्पुरस्तादितियावत् । वेश्मवातायनस्था स्वगृहगवाक्षान्तर-स्थासती पतिव्रतानां अन्यत्र गमनानौचित्यात् । तदुक्तं प्राचीनैः "पदन्या-सो गेहाद्बहि रहिफणारोहणसमः निजावासादन्यद्भवन मपरद्वीपतुलितं" इति । प्राञ्जलिर्बद्धाञ्जलिश्च सती अनेनोपकर्तरि भक्तिभावप्रदर्शनमभिव्यज्यते मन्दंमन्दं मधुरमधुरं च यथातथा वाचमूचे महाकुलीनस्त्रीस्वभावानुरूप-मुक्तवतीत्यर्थः ॥ अत्र वर्णानां पदानां पदार्थानां च विप्रलम्भ शृङ्गाराभि-व्यञ्जकत्वमनुसन्धेयम् ॥

क्षेमी स्वामीत्यमृतसदृशैरक्षरैः प्रीणयन् मां ।
तत्सन्देशान् प्रणयमधुरान् कर्णमूले करोषि ॥
आयातस्त्वं जलधर मम प्राणदानाय सत्यं ।
किञ्चिच्छान्तः किल विधिवशादद्य मे पापवेगः ॥ ९ ॥

तदुक्तिप्रकारमेवाह क्षेमीति । हे जलधर! सकललोकजीवनाधार स्वामी मन्नाथः क्षेमी क्षेमवान् सुखेन वर्तत इत्यमृतसदृशैरक्षरैः मां प्रीणयन् प्रत्यक्षरममृतं स्रावयन्निव मामाप्याययन्नित्यर्थः । प्रणयमधुरान् तत्सन्देशान् समये समागत्य यतः कर्णमूलेकरोषि मामत्यादरेण श्रावयसि अतस्त्वं मत्प्रा-णदानाय मामुज्जीवयितुमेवायातः सत्यं । अन्यथा मत्प्राणहानिरेव निश्चिते-त्यर्थः । अतएव मे विधिवशात् मदीयानुकूल दैवबलादद्येदानीं मे पापवेगः

मदीयदुर्दैवप्रयुक्त क्रूरफलदानशक्तिः किञ्चिच्छान्तः नतु पापं सन्देशप्राप्तिमात्रेण सम्पूर्णफलाभावात् एवञ्च मम प्रसन्नो विधिरेव त्वामानीय त्वन्मुखेन मत्प्रियप्रणयपेशलान् सन्देशान् श्रावयन्मामुज्जीवयतिस्मेति निर्गलितोर्थः ॥

वाताधूतं व्यजनपवनै र्वीजये किं वृथा त्वां ।
शीतात्मानं शिशिरशिशिरैः स्नापये किं पयोभिः ॥
सर्वैश्वर्यप्रभवमतिथिं किं प्रदायार्चये त्वां ।
पूर्णे दानं भवति हि वृथा वारिदानं यथाब्धौ ॥ ६ ॥

गृहागतमतिथिं वाचा सत्कुर्वाणा प्रशंसति वाताधूतमिति । वातेन वायुना आधूतं समन्ततोप्याहन्यमानं वाताधारमितियावत् । एतादृशं त्वां किं किमिति वृथा व्यजनपवनैर्वीजये गृहागतस्यातिथेः प्रथमं व्यजनपवनोपचारस्समुचितोपि त्वयिविषये स निरर्थक इतिभावः । किञ्च शीतात्मानं जलदं जलधरं जलमयञ्च जलमयत्वमस्य कालिदासमहाकविनैव प्रदर्शितं । "धूमज्योतिस्सलिलमरुतां सन्निपातः क मेघः" इति एतादृशं त्वां शिशिरशिशिरैरत्यन्त शीतलैः नित्यार्थे द्विर्भावः पयोभिः किं किमिति स्नापये तव तृप्तिकरत्वाभावात् तदपि व्यर्थमेवेत्यर्थः । तथापि यत्किञ्चिदर्थदानेन सन्तोष्यतामतिथिरिति चेत् तदपि नसङ्घटत इत्याह सर्वेति । सर्वैश्वर्यप्रभवं सर्वेषां समस्तानां ऐश्वर्याणां भोज्यजातानां प्रभवमुत्पत्तिस्थानं मूलकारणमितियावत् अयमेवार्थः कविना द्वितीयसर्गे प्रदर्शितः "त्वन्मूलं हि प्रविततमिदं सर्वसौभाग्यमुर्व्यां" इति एवञ्च त्वदभावे जगत्यैश्वर्यकथापि लुप्येत । एतादृशमतिथिं त्वां किं वस्तु प्रदायार्चये सन्तोषये नकिञ्चिदपि सर्वेषां त्वमेव दातासि त्वद्दत्तस्य तवैव समर्पणमित्यनुचितं तदतिरिक्तं नकिञ्चिदस्ति अतः किमपि प्रदाय त्वामर्चितुमप्यशक्तास्मीतिभावः । अथवा त्वयि यत्किञ्चिद्दत्तमपि निष्फलमेवेत्याह पूर्णेति—पूर्णे जलसम्पूर्णे त्वयि धनसम्पूर्णे जने च दीयतइतिदानं दत्त-

मितियावत्। कर्मणिल्युट् पूर्णे समुद्रे दत्तं यत्किञ्चिज्जलमिव वृथा व्यर्थं भवति अगणनीयत्वादनुपकारित्वाच्चेतिभावः। एवञ्च देयं चेत् दरिद्रायैव नसम्पूर्णायेति निर्गलितोर्थः॥ अत्र मेघस्य विशेषस्य समृद्धजनरूपस्य सामान्यस्य पुनरब्धिरूपस्य विशेषस्य च अर्थान्तरन्याससरण्या निबद्धत्वात् विकस्वरालङ्कारः 'यस्मिन् विशेषसामन्यविशेषास्सविकस्वर' इति तल्लक्षणात्॥ ६॥

धूमाकारस्त्वमिति हृदये नावजाने भवन्तं।
दैवीं शक्तिं भवति फलदां भावयित्वार्थये त्वाम्॥
तस्याश्शक्तेः क्वचिदपि दृढा भावना सिद्धिहेतुः।
तस्माद्युक्ता भुवि बहुमतिश्चेतनेऽचेतने वा॥ ७॥

अथ द्वाभ्यां मेघमभिमुखीकर्तुं प्रशंसति धूमेति। हे जलधरेतिशेषः त्वं धूमाकारः धूमस्वरूपः धूमसदृशोवा अचेतनत्वादुपेक्षणीय इतियावत् इति भवन्तं त्वां नावजाने नापमानयामि किंतु महान् माननीयः पदार्थ इति बहुमन्य एवेत्यर्थः कुतस्तदित्याह दैवीमिति। भवत्यधिष्ठानरूपे त्वयि विद्यमानां भवदधिष्ठात्रीमितियावत् देवस्येमां दैवीं तस्येदमित्यण् टिड्ढाणेत्यादिना ङीप्। शक्तिमात्मकलां फलदामभीप्सितार्थदानदक्षां सतीं भावयित्वा मनस्यनुसन्धाय त्वां आत्मचैतन्यविशिष्टाधिष्ठानरूपं भवन्तमर्थये किञ्चिद्याचये किमर्थमेतदित्यतआह तस्याइति। तस्याश्शक्तेस्तादृग्भगवत्कलायाः क्वचिदपि मनुजपशुशिलादारु मृत्तिकालोहप्रतिमादिष्वपि दृढाभावना अयमेवास्मदभिमतो देव इत्यविच्छिन्नप्रत्ययः सिद्धिहेतुरिष्टार्थप्राप्तिकारणं भवतीत्यर्थः।

प्रोच्यतेचाग्नेये।

अग्नौक्रियावतां देवः स्वौदेवोमनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः॥ इति;

तस्माद्भावनायाः फलहेतुत्वात् अन्यस्मिन् लोके चेतने मनुष्यादिप्राणिनि वा अचेतने शिलादारुलोष्ठादौ वा बहुमतिः। पूज्यत्वसम्भावना युक्ता समुचिता सर्वस्याप्यात्मचैतन्याधिष्ठितत्वादितिभावः। तथाच अचेतनोयं मेघइति प्राकृतबुद्धिं विहाय त्वमेव भगवानिति निश्चित्य त्वां सम्प्रार्थय इति-मुख्योभिप्रायः॥

पुष्यस्यद्भिर्भुवनमखिलं प्राप्य वातार्कसाह्यं।
सर्वान् लोकानपलपसि ते वाञ्छितश्चेत् क्षणेन॥
नस्त्रीरूपस्त्वमसि न पुमान् नैव दीर्घो न खर्वः।
दृश्यादृश्यो वियति सततं दीप्यसे देवतात्मा॥ ८॥

इदानीं देवत्वमारोप्य स्तौति पुष्यसीति। वातार्कसाह्यं तयोस्सहायकर्म-प्राप्य मेघस्य वर्षणे वायुसाह्यं प्रसिद्धं अर्कसाह्यन्तु "यावदादित्यस्तपति घृष्टिभिस्ताभिः पर्जन्योवर्षति" इति श्रुतिसिद्धं अखिलं भुवनं अद्भिः पुष्यसि पोषयसि जलप्रदानेन सर्वान् प्राणिनः प्रवर्धयसीति यावत्। अन्यत्र देवः परमेश्वरोपि "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इति श्रुत्या वातार्कौ सहायत्वेन नियम्य स्वसृष्टान् प्राणिनः अद्भिः उपलक्षणया भोग्यवस्तुभिः परिवर्धयते हे मेघ! ते वाञ्छितं चेत्। अभिलाषश्चेत् सर्वान् लोकान् क्षणेनापलपसि आवरणेन सन्निहितमपि अदृश्यं करोषीत्यर्थः भगवानपि सञ्जिहीर्षाचेत् क्षणेन सर्वमन्तरयति। नस्त्रीरूपस्त्वमसि नपुमान् नैवदीर्घो नखर्वः उभयत्र समानमेवैतत् त्वं तावद्वायुवेगवशादृश्यादृश्योभवसि भगवानपि कार्यरूपेण दृश्यः कारणरूपेणादृश्योभवति त्वं तावद्वियत्यंतरिक्षे दृश्यसे भगवांस्तु वियति द्युलोके अतस्त्वं देवतात्मा देवतायाः परमात्मनः आत्मा स्वरूपं यस्य तादृशः भगवानेवसन् दृश्यसइत्यर्थः। अत्र मेघे सादृश्यमूलकस्य भगवदभेदस्यारोपादाधिक्यन्यूनत्वयोरप्रतिपादनादनुभयाभेदरूपकमलङ्कारः॥

निर्व्याजोयं जलद मयि ते भाति कारुण्यबन्धः ।
यन्मां दीनामवितुमनघ प्राप्तवान् दूरदेशात् ॥
औदार्यं ते निरवधि जनैश्श्लाघ्यसे सर्वदा त्वम् ।
स्वार्थं हित्वा परहितकृतां सर्वतो गौरवं हि ॥ ९ ॥

अथ मेघं स्वकार्ये प्रवर्तयितुं प्रस्तौति निर्व्याजेति—हे जलद सर्वदा-दानशीलेति तदर्थः मयि ते अयमनुभूयमानः कारुण्यबन्धो दयाप्रसङ्गः निर्व्याजः निर्निमित्तस्सन् भाति प्रकाशते न मया किञ्चिदुपकृतं भवते नापि त्वया किञ्चित् प्रतिफलमपेक्षितं अतइतिभावः । किञ्च यद्यस्मात्कारणात् दीनां यत्किञ्चिदुपकर्तुमप्यसमर्थां मामवितुं दीनेषु दयेतेति शास्त्रमनुसृत्य रक्षितुं दूरदेशात् भरतखण्डान्तर्वर्तिरामगिर्याश्रमात् प्राप्तवानागतवानसि तस्मादिति-पूर्वेणान्वयः । किञ्च ते तवौदार्यं दातृत्वं निरवधि इयत्तारहितमपरिमितमिति-यावत्, तवैकेनैव वर्षेण सहस्रस्यायुतस्य लक्षस्य कोटेर्दशकोटेश्शतकोटेस्त-दुपरितनस्य वा धनस्य लाभादितिभावः । अतः निर्व्याजदयाशालित्वान्महो-दारत्वाच्च त्वं सर्वदा जनैः श्लाघ्यसे असन्निहितानप्यन्विष्यान्विष्य रक्षन्पूर्वो-यं महादातेत्यभिनन्द्यसे गौरवपात्रीक्रियसइति यावत् । अत्रार्थान्तरं न्यस्य-ति स्वार्थमिति—यस्स्वप्रयोजनं परित्यज्य परहिताय प्रवर्तते तस्य सर्वस्माज्ज-नाद्गौरवं भवतिखलु अतस्त्वमपि तादृशो महागौरवशालीतिभावः । अर्था-न्तरन्यासोलङ्कारः ॥

भ्रातश्श्रुत्वा प्रियतमकथां त्वद्वचोभिर्विशुद्धां ।
शान्ताऽशङ्काप्यनुदितधृतिस्सम्प्रति प्राणनाथे ॥
स्नेहात्कृच्छ्रं किमपि किमपि स्वैरमाशङ्क्य दूये ।
वीताऽशङ्का भवति हि जगन्मातुरन्या न कापि ॥ १० ॥

स्वाभिप्रायं कञ्चिद्दर्शयति भ्रातरिति—हे भ्रातः औपचारिकमिदं भ्रातृत्वारोपणं त्वद्वचोभिस्त्वदुदीरितैः शुद्धां मदननुरक्त्यन्यानुरक्तिर्यामकलुषितां

प्रियतमकथां मत्प्राणेशचरित्रं श्रुत्वा सादरं सप्रमोदं च समाकर्ण्य शान्ताश्श्रवणोत्तरक्षणमेव प्रणष्टाः आशङ्काः प्रियः किं कुशली ? किमुताकुशली ? किं मय्यनुरक्तः ? किमुतान्यानुरक्तः ? किमायाति ? किं वा पलायितः ? इत्याद्याः यस्यास्तादृश्यपि त्वद्वचसां सर्वशङ्कानिरासकत्वादिति भावः । सम्प्रतीदानीं त्वदागमनान्तरमित्यर्थः । प्राणनाथविषये अनुदितधृतिरनुत्पन्नधैर्या सती एतावतिकाले स्नेहात् कीदृगवस्थोऽभूदिति चिन्तयेतिभावः । किमपिकिमपि कृच्छ्रं अयंव्याधितोभूद्वा बाधितोभूद्वा अन्यथाभूदित्यादिकं स्वैरं स्वेच्छानुरूपमाशङ्क्य दूये सन्तप्ये । अतिस्नेहः पापशङ्कीतिन्यायादिति भावः । जगन्मातुः महालक्ष्म्याः अन्या अन्याराद्वित्यादिनापञ्चमी । कापि देवीवा मानुषीवा वीताशङ्कानिरातङ्का न भवति साशङ्कैव भवतीत्यर्थः । तस्याः विगलितसकलविकल्पत्वात् इतरासां सांसारिकत्वादितिभावः ॥

भूयो भूयश्श्रुतमपि मया प्रेयसः प्रेमवृत्तं ।
पृच्छामि त्वां पुनरपि सकृद्दीनबन्धो दयेथाः ॥
दूरे नाथे विरहविधुरास्वङ्गनासु क्षितौ यत् ।
प्रेयोवृत्तात्प्रणयगुणितादान्यदाश्वासहेतुः ॥ ११ ॥

भूयोभूयइति—मया प्रेयसः प्रियस्य प्रेमवृत्तं प्रणयोदन्तः भूयोभूयः श्रुतमपि त्वत्तइतिशेषः । पुनरपि त्वां पृच्छामि तदेव पुनःपुनराख्याहीति प्रार्थये । हे दीनबन्धो सकृद्दयेथाः पुनरप्येकवारं तदेव मां श्रावयेत्यर्थः । किमर्थमेवं पुनःपुनरभिधानमित्यतआह दूरइति—नाथे प्रियतमे दूरस्थिते सति विरहविधुरासु विरहविह्वलासु अङ्गनासु विषये यद्यस्मात्कारणात् क्षितौ भुवि प्रणयेन विश्वासेन गुणितात् आवर्तितात् पौनःपुन्येन स्मृतादित्यर्थः । प्रेयोवृत्तात्प्रियवृत्तान्तात् अन्यत् भिन्नं सामान्ये नपुंसकम् । आश्वासहेतुर्नभवति । एवञ्च वियोगकाले कुलवधूनां प्रियतमवृत्तान्तस्य पुनःपुनश्रवण-

स्मरणादिरेव आश्वासहेतुर्भवतीति तात्पर्यार्थः । अतः पुनः पुनः प्रार्थनमुचितमेवेतिभावः ॥

दूरे कस्माद्वसति मकरोद्रामगिर्याश्रमेऽसौ ।
पुण्यं क्षेत्रं भवतु स तथा किं न कैलास एषः ॥
क्रीडास्थानं यदि गिरिरयं यक्षरक्षोगणानां ।
शुद्धे चित्ते भुवनमखिलं पुण्यतीर्थायते हि ॥ १२ ॥

इदानीं तु "तत्र सञ्चरो रामगिर्याश्रमस्थः" इतिप्रियसन्देशं मनसि निधाय प्रश्नं परिपृच्छति दूरइति—असौ मन्नाथः दूरे अस्मात्कैलासादतिदूरस्थिते रामगिर्याश्रमे कस्माद्धेतोर्वसतिं स्थानमकरोत् निष्कारणमतिदूरस्थितिरनुचितैवेति भावः । विचार्य स्वमनसि स्वयमेव समाधत्ते पुण्यं क्षेत्रं भवतु सइति स रामगिर्याश्रमः पुण्यं क्षेत्रमिति चेद्भवतु तथास्तु एवञ्च दूरेपि पुण्यक्षेत्रे वसतिरुचितैवास्त्विति पूर्वोक्तार्थस्य प्रतिषेधः । अतएव आक्षेपालङ्कारः । "आक्षेपस्स्वयमुक्तस्य प्रतिषेधो विचारणात्" इतिलक्षणात् । पुनः पृच्छति तथेति—एषकैलासः अस्मत्पुरस्सन्निहितोद्रिः तथा पुण्यक्षेत्ररूपः न किं नभवति किं भवत्येवेत्यर्थः । तथाच अत्रावस्थितिरुचिततरेतिभावः । पुनस्समाधत्ते क्रीडेति—अयं गिरिः कैलासः यक्षाणां रक्षसां गणानां प्रमथानां च क्रीडास्थानं विहारस्थानं यदि तेषां सम्मर्दवशादशुचिस्थानं भवतीतिचेदस्तु तथापि चित्ते स्वमनसि शुद्धे संति अखिलं भुवनमपि पुण्यतीर्थायते हि परिशुद्धक्षेत्रसदृशं भवति खलु । तथाच शुद्धचित्तानां सर्वमपि स्थलं परिशुद्धमेवभवतीत्यतोत्रैव स्थितिरस्योचिततरेतितात्पर्यार्थः । अत्र पूर्ववदाक्षेपस्य काव्यलिङ्गोपमयोश्च संसृष्टिः ॥

दूरे स्थित्वा सततमपि मां चिन्तयन् मन्दभाग्यां ।
क्लान्तस्वान्तः कथमिव नयेद्दीनदीनो दिनानि ॥

त्याज्यान् भोगान् त्यजतु स गृहे किं प्रवासी वृथाऽभूत् ।
कष्टे काले जगति महतां बुद्धयोऽपि स्खलन्ति ॥ १३ ॥

अथ दूरगतं प्रियमनुशोचति दूरइति—स मे प्राणकान्तः दूरेस्थित्वा मन्दभाग्यां मां सततमपि रात्रिंदिवमपि चिन्तयन् मदेकायत्तत्वादितिभावः। क्लान्तं लूनकिसलयवदतिशिथिलं स्वान्तं मनो यस्य तादृशस्सन् किञ्च दीन-दीनश्च सन् दिनानि मद्विरहदीर्घाणि कथमिव नयेत् कथंकारं यापयेत् इवे-ति वाक्यालङ्कारे। गृहे स्वभवने स्थितस्सन् त्याज्यान् भोगान् मत्सम्भोग-संश्लेषणादीन् त्यजतु नानुभवतु नाम वृथानिष्फलमेव किं किमर्थं प्रवासी देशान्तरगमनवानभूत् तदिदमनुचितमेवेति निश्चित्यार्थान्तरन्यासेन समाधत्ते कष्टइति—कष्टेकाले शापविपत्यादिना कृच्छ्रावस्थायां सत्यां महतामपि बुद्धयः स्खलन्ति इतिकर्तव्यतामूढतया स्वयमनभिमतेऽपि प्रवर्तन्त इत्यर्थः। अत्र नायिकानायकाभ्यां विभावितः परस्परालम्बनकरतिरूपः स्थायी साधारणी-कृतवर्षासमयकेकारवादिभिः उद्दीप्यमानतया प्रवासदेहकार्श्यादिभिरनुभाव्य-मानतया सततचिन्तामनःक्लान्तिदैन्यबुद्धिस्खालित्यादिभिर्व्यभिचर्यमाणतया त्र कविनिबद्धाक्षेपकाव्यलिङ्गार्थान्तरन्यासानुप्रासाद्यलङ्कारैः परिष्क्रियमाणः रीतिपाकपदमैत्र्यर्थौचित्यादिभिरभिपोष्यमाणस्सन् अलौकिकतामासाद्य सहृ-दयैश्चर्व्यमाणो रसात्मकतामापद्यत इति ध्येयम् ॥

विज्ञाप्यं मे जलधर! वचश्श्रावयन् प्राणनाथं।
सौजन्यं ते प्रकटय मुहुः प्राञ्जलिः प्रार्थये त्वाम् ॥
निश्शब्दस्त्वं मम निगदितान्यभ्युपैषीति मन्ये।
वक्तव्यांशे जगति महतां मौनमङ्गीक्रिया हि ॥ १४ ॥

नैपुण्येन स्वसन्देशं मेवमङ्गीकारयति विज्ञाप्यमिति—हे जलधर! मे विज्ञाप्यं वचः प्राणनाथं श्रावयन् सन् अणिकर्तुः प्राणनाथस्य ण्यन्तावस्था-

यां गतिर्बुद्धीत्यादिना कर्मत्वम्। ते तत्र सौजन्यं प्रकटय अहोमहानुभावस्सुजनोऽयं जलधरः, यक्षपत्नीसन्देशं तत्प्रियमुपनयन्नुपकर्तासीदिति यशःप्रकाशयेत्यर्थः। प्रगतौ अञ्जली यस्यास्तादृशी सती त्वां मुहुः प्रार्थये एतावानेव मदुपकारइतिभावः। त्वं निश्शब्दः मम प्रत्युत्तरं न ददासीतितदर्थः। तथापि मम निगदितानि वचनानि अभ्युपैष्यङ्गीकरोषीति मन्ये। "ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्" इति न्यायादिति भावः। वक्तव्यांशे प्रत्युत्तरदानविषये जगति महतां मौनमङ्गीक्रिया हि तूष्णींभावः अङ्गीकारप्रायएवेतिभावः। अर्थान्तरन्यासोऽलङ्कारः॥

मद्वृत्तान्तं त्वयि कथयति प्रेरिते वार्षवातैः।
भर्तुश्चिन्ताकलुषितधियः कष्टमुत्प्रेक्ष्य दूये॥
मित्रस्नेहात्स्वसरि च मयि प्रेमभावानुबन्धा
त्कारुण्याद्वा स खलु भवता रक्षणीयः प्रमादात्॥ १५॥

मद्वृत्तान्तमिति—वर्षासु भवा वार्षाः तत्रभवइत्यण्। ते चते वाताश्च तैस्तदुद्दीपकैरितियावत्। प्रेरिते तत्सन्निधिं प्रापिते त्वयि मद्वृत्तान्तं कथयतिसति चिन्ताकलुषितधियः मद्ध्यानविपर्यस्तबुद्धेर्भर्तुः मन्नाथस्य कष्टं तात्कालिकमनोन्यथामुत्प्रेक्ष्याभ्यूह्य दूये तदा स कीदृगवस्थस्स्यादिति खिद्ये। अतो भवता स मे पतिः मित्रस्नेहात् मत्सख इति स्नेहमनुरुध्येति ल्यब्लोपेपञ्चमी। एवमुत्तरत्रापि। स्वसरि सहोदरीप्रायायां मयि प्रेमरूपो योभावश्चित्तवृत्तिविशेषस्तस्माद्वा कारुण्यात्त्वदीयसहजदयाशालित्वाद्वा प्रमादात्प्राणान्तकरादनवधानताजन्यादपायात् रक्षणीयः त्रातव्यः। भीत्रार्थानामितिपञ्चमी। एवमुचिताशङ्कापूर्वकमनुनीय पतिप्राणरक्षणप्रार्थनया नायिकायामतिचातुर्यमभिज्ञत्वमात्मकान्तप्रणयातिशयश्च व्यज्यते॥

मद्वार्तायाः कथनसमये स्वात्मनाच्छादयेन्दुं।
श्रोत्रासह्यान् शुकपिकरवान् गर्जितैर्निर्जयाऽशु॥

नृत्तारम्भं शिथिलय धनुर्दर्शयन् बर्हिबन्धो ।
धारापातैः परिहर परावर्तयन् भृङ्गमालाम् ॥ १६ ॥

इदानीं सम्भविष्यतः प्रमादान् तत्परिहारोपायांश्च दर्शयति—मद्वार्तेति—मद्वार्तायाः मदीयवृत्तान्तस्य कथनसमये परिबोधनकाले स्वात्मना स्वशरीरेण इन्दुमाच्छादय तददर्शनतां प्रापय उद्दीपकदर्शनेन तत्प्राणहानिभयादिति भावः । श्रोत्रासह्यान् विरहकाले व्यथाकरत्वाच्छ्रवणकटून् शुकपिकरवान् गर्जितैर्निर्जय त्वदीयगर्जितारवेण तानश्रुतान् कारय । बर्हीति यस्तेबन्धुर्मित्रं तस्य नृत्तारम्भं धनुस्त्वत्सन्निहितमैन्द्रं दर्शयन् शिथिलय त्याजय । धनुर्दर्शनेन ते भीत्वा नृत्तकुतूहलं त्यजेयुरेवेति भावः । भृङ्गमालां भ्रमरश्रेणीं धारापातैर्जलधारासम्पातैः परावर्तयन् निवर्तयन् जलपाते तेषां सञ्चाराक्षमत्वादिति भावः । परिहर दूरं गमय । एवमुद्दीपकपरिहारेण स चित्तवैकल्यं विहाय सावधानं मत्सन्देशं श्रुणुयादितिभावः । अत्रवक्तुर्मेघस्याप्युद्दीपकत्वेपि कथञ्चित्तत्सोढव्यमितिज्ञेयम् । उक्तंच कालिदासेनैव "तस्यस्थित्वा कथमपि पुरः कौतुकाधानहेतोः" इति ॥

निद्रामुद्री नहि नहि धवे शोकमुद्रीकृताक्षे ।
निश्शब्दस्सन्नपसर विभुर्यावदुन्मीलिताक्षः ॥
शोकान्मोहाद्विरत हृदये स्वोक्तिकालं विदित्वा ।
वाचा क्रेतुं सुकृतमधिकं प्रक्रमेथाः क्रमेण ॥ १७ ॥

अथ द्वाभ्यां सन्देशनिवेदनक्रममुपदिशति निद्रेति—धवे मद्भर्तरि निद्रामुद्रीकृतदृशि इतिवक्तव्ये निद्रामुद्रीत्यर्धोक्तौ विरहिणस्तस्य निद्राभावमाशङ्क्य नहिनहीति निषेधः । ततश्शोकमुद्रीकृताक्ष इत्यन्यथापूरणेन विच्छित्तिविशेषः । तथाच निद्राभावेपि तस्मिन् शोकनिमीलितनयने सति निश्शब्दस्सन्नपसर । अन्यथा तस्य आकस्मिकोद्वेगस्स्यादितिभावः । विभुस्तत्त्वाव-

बोद्धा यावदुन्मीलिताक्षः वृथाऽयं शोक इति निश्चित्य यावन्नयने निमीलयेत्तावदिति पूर्वेणान्वयः। अथ शोकान्मोहाच्च विरत हृदये प्रसन्नात्मनि सति तस्मिन् जुगुप्साविरामेत्यादिनापञ्चमी। स्वोक्तिकालं सन्देशनिवेदनावसरं विदित्वा निश्चित्य वाचासुकृतमधिकं कर्तुं 'वाचाधर्ममवाप्नुहि' इति न्यायमनुसृत्य क्रमेण श्रुतिक्रमेणाभिधातुं प्रक्रमेथाः उपक्रमस्व प्रोपाभ्यां समर्थाभ्यामित्यात्मनेपदम्। अत्र अभिधेहीत्यर्थस्य वाचा कर्तुं सुकृतमधिकं प्रक्रमेथा इति भङ्ग्यन्तरेण व्यक्तीकरणात्पर्यायोक्तमलङ्कारः। "पर्यायोक्तन्तुगम्यस्य वचोभङ्ग्यन्तराश्रयम्" इतिलक्षणम्॥

अस्माद्देशात्पुनरपगतो रामगिर्याश्रमस्थं।
मित्रं दृष्ट्वा मृदुलहृदयं मद्वियोगाभितप्तम्॥
सिञ्चन् शीतैर्निजजलकणैस्स्वस्थचित्तं विधास्यन्।
मन्दं मन्दं कथयतु भवानेतदुक्तं यथोक्तम्॥ १८॥

अस्मादिति—हे जलधर! भवानस्माद्देशात्कैलासोपान्तात् पुनरपगतः प्रतिनिवृत्तस्सन् रामगिर्याश्रमस्थं एतेनान्वेषणायासाभावस्सूच्यते। मृदुलहृदयं एतेनाभिगम्यत्वमभिव्यज्यते। मद्वियोगाभितप्तं एतेन दयनीयत्वमभिव्यज्यते। एतादृशं मित्रं भवत्सखं दृष्ट्वा शीतैर्निजजलकणैस्सिञ्चन्सन् तस्य सेचनं स्नेहोचितमितिभावः, स्वस्थचित्तं दुःखपरवशीकृतचित्तमपि मित्रदर्शनेन प्रियावृत्तान्तश्रवणोत्कण्ठयाच स्वायत्तचित्तं विधास्यन् विधातुमिति तात्पर्यार्थः। मन्दंमन्दं न तु घोरं यथातथा एतदुक्तं मयाद्यनिवेद्यमानं यथोक्तमुक्तमनतिक्रम्य यथार्थेऽव्ययीभावः। यथाशब्दार्थानुपूर्व्या मयाप्रतिपाद्यते तथैवेत्यर्थः। कथयतु सादरं सविनयं सस्नेहं च ब्रवीतु॥

सत्यं यस्य प्रियसख इव द्वेष्यकोटावसत्यं।
त्याज्ये पक्षे स्थितिमुपगताः कोपदम्भाभिमानाः॥

स्वप्नेप्यासन् परयुवतयस्सोदरीवर्गभाजः ।
स त्वं क्वासि प्रियसख कथं मय्युपेक्षां करोषि ॥ १९ ॥

अथेदानीमभिमुखस्थितमिव प्राणनाथं निर्दिश्य तद्गुणवर्णनपूर्वकं तमनुशोचति सत्यमिति—हे प्रियसख ! यस्य तव सत्यं प्रियसख इव भवति सर्वदा सत्यसन्धस्त्वमित्यर्थः । असत्यं द्वेष्यकोटौवर्तते सर्वदाऽसत्यद्वेषीत्यर्थः । कोपदम्भाभिमानाः त्याज्ये पक्षे स्थितिमुपगताः परित्यक्तकोपदम्भाभिमानस्त्वमित्यर्थः । परयुवतयः परस्त्रियः यस्य ते स्वप्नेपि सोदरीवर्गभाजः आसन् परनारीसहोदरइत्यर्थः । स तादृशधीरोदात्तगुणयुक्तस्त्वं क्वासि क्वनु लीयसे अदर्शनतांगतोसीत्यर्थः । किञ्च मयि निर्दुष्टायामनुरूपायाञ्च प्रियायां कथं केन कारणेन उपेक्षां करोषि तादृशं कारणं नकिञ्चिदप्यस्ति अतश्शीघ्रं सन्निधेहीति तात्पर्यार्थः ॥

दूरीभूते दयित भवति त्वां विनाऽहं वृथाऽसं ।
निर्यत्नाधीरिव विरहितेवाकृतिस्सद्गुणेन ॥
भोगेच्छेव द्रविणरहिता श्रीरिवारोग्यशून्या ।
वाणीसत्यादिव विगलिता श्रूयतां मद्दशापि ॥ २० ॥

अथ सप्तभिः श्लोकैः स्वावस्थां प्रस्तौति दूरीभूतइति—हे दयितप्राणेश्वर ! त्वयि, दूरीभूते दूरंप्रयातेसति त्वांविना अहं वृथा व्यर्थस्थितिरासम् । उपमानविधया वैयर्थ्यंप्रदर्शयति निर्यत्नेति—निर्गता यत्नान्निर्यत्ना । निरादयःक्रान्ताद्यर्थेपञ्चम्येति पञ्चमीसमासः । यत्नरहिता धीरिव वृथाऽसं तथाच नवनवोन्मिषत्प्रतिभायास्सत्वेपि प्रयत्नाभावे सा यथा व्यर्था भवति तद्वदितिभावः । सद्गुणेन विरहिता आकृतिरिव सद्रूपसम्पत्तिसत्वेपि सद्गुणसाहचर्याभावे सा यथा निष्फला तद्वदितिभावः । द्रविणरहिता भोगेच्छेव यद्यपि कस्यचित्स्रक्चन्दनवनिताद्युपभोगेच्छा वर्तते तस्य यत्किञ्चिद्धनस्याप्यभावे सा यथा व्यर्था भवति

तद्वदिति भावः । आरोग्यशून्या श्रीरिव सम्पत्समृद्धेस्सत्वेपि आरोग्याभावे तस्य सा समृद्धिर्यथा वृथा तद्वदिति भावः । सत्याद्विगलिता चाकचक्यप्रवृत्तापि सत्यविरहिता वाणी यथा वृथा तद्वद्व्यर्थोऽहमस्मीत्युपमामाला । एवंभूता मद्दशा श्रूयतामेवंकृतवता भवतेति शेषः ॥

भित्तेर्मूले भवनधरणावर्धपद्मासनस्था ।
द्वारे चक्षुर्जलकणचितं न्यस्य पाणौ कपोलम् ॥
ध्यायन्ती त्वां प्रचलति तृणेप्यागतं तर्कयन्ती ।
मासानष्टौ कथमपि भवद्दर्शनार्थिन्यनैषम् ॥ २१ ॥

भित्तेरिति—भवनधरणौ गृहान्तःप्रदेशे भित्तेर्मूले स्वशरीरपश्चाद्भागावलम्बककुड्याधोभागे अर्धेन पद्मासनेन तिष्ठतीत्यर्धपद्मासनस्था । तत्र पद्मासनं नाम त्रिशिखिब्राह्मणोपनिषदि—

ऊर्वोरुपरि वै धत्ते सदा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ इति ।

तस्यार्धं नाम एकां जङ्घां भूमौ तिर्यक्प्रसार्यापरामुत्क्षिप्य तत्र बाहुमध्यमारोप्य स्थितिः । एवं तिष्ठन्ती सती जलकणचितं अश्रुधाराव्याप्तं चक्षुर्द्वारे न्यस्य प्रियागमनशङ्कया द्वारभागं पश्यन्तीति यावत् । पाणौ उत्क्षिप्तजङ्घाश्रयिणि करतले कपोलं न्यस्य । स्त्रीणां कष्टावस्थायां स्वाभाविकी स्थितिरियम् । एवं स्थित्वा त्वां ध्यायन्ती तृणेपि प्रचलति सति किञ्चिन्मर्मरध्वनावपि त्वदीयपादन्यासध्वनिशङ्कया त्वामागतं तर्कयन्ती च सती अष्टौ मासान् प्रायशः उत्थानद्वादशीमारभ्य शयनद्वादशीपर्यन्तान् भवद्दर्शनार्थिनी कथमप्यनैषं कथंकथञ्चिद्दुःखेन जागरेण चात्यवाहयम् । पुनर्दर्शनाशयेति भावः । स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्" इति लक्षणात् ॥

पौष्पीं शय्यामभजमथ तां पद्मिनीपत्रशय्या ।
मुष्णालुद्रांक् शशिमणिभुवं चन्दनोशीरचर्चाम् ॥
केनाप्यात्मा नहि शिशिरितस्त्वद्वियोगार्कतापः ।
शैत्यं सर्वं जगति सहसा शोषयामास नूनम् ॥ २२ ॥

पौष्पीमिति—उष्णालुरुष्णमसहमानाऽहं शीतोष्णतृप्रेभ्यः तदसहन इत्यालुः । पौष्पीं पुष्पमयीं शय्यामभजं । शैत्यसंपादनार्थमिति भावः । अथ तत्र शैत्याननुभवानन्तरं पद्मिनीपत्रशय्यामभजं । सततजलोषितानि पद्मिनीपत्राणि शैत्यमवश्यं दद्युरित्याशयेति भावः । अथ शशिमणिभुवं चन्द्रकान्तमणिमयभूमिमभजं । चन्द्रोदयकाले वा जलं प्रस्राव्य सा शीतलयेदात्मानमितीच्छयेति भावः । अथ तत्रापि शैत्यादर्शनानन्तरं चन्दनोशीरयोश्चर्चां लेपनमभजं । गन्धोदकसेचनं बाह्यतापं शमयत्येवेति निश्चयादिति भावः । केनापि पूर्वनिर्दिष्टेनैकेनापि पदार्थेन आत्मा मच्छरीरं नहि शिशिरितः अभूत् । कुतस्तथेति विविच्यमाने त्वद्वियोग एवार्कस्तस्य तापआतपः जगति विद्यमानं शैत्यं सर्वं शोषयामास नूनमित्युत्प्रेक्षा ॥ अन्यथा क्वचिदपि शैत्यं स्यादिति भावः । अत्र वियोग एवार्क इत्यभेदारोपाद्रूपकम् । एकस्याः नायिकायाः पुष्पशय्यापद्मिनीपत्रशय्याद्यनेकाश्रयकथनात् पर्यायालङ्कारः । तयोश्च आत्माधिकरणकशीतलत्वाभावनिमित्तेन जगदधिकरणकशैत्यशोषणोत्प्रेक्षया सह संसृष्टिः । तथाच असह्यविरहवेदनया अतिसन्तप्ताऽस्मीति भावः ॥

मारः क्रूरः कठिनहृदयश्चन्द्रमाश्चण्डतापः ।
प्राणाकर्षी पवनहतको दुस्सहाः केकिकेकाः ॥
वाचा प्रीतिं विशदयसि मे नाग्रतस्सन्निधत्से ।
मन्ये पुंसां कुसुमपिहितं वज्रमेवान्तरङ्गम् ॥ २३ ॥

मार इति—मारो मदनः मयि विषये क्रूरः वर्तते । एष चन्द्रमाः मयि चण्डतापः अतएव कठिनहृदयः मन्मारणोद्युक्त इव प्रतिभातीति यावत् ।

हतकःपवनः पवनहतकः मयूरव्यंसकादयश्चेति विशेष्यपूर्वपदसमासः। प्राणाकर्षी प्राणापहारोद्योगीव वर्तत इत्यर्थः। केकिनां प्रचलाकिनां केकाः केकारावाः दुस्सहास्सोढुमशक्याः ईषद्दुस्सुष्वित्यादिना खल्। एतैरुद्दीपनैर्बाध्यमानास्मीतिभावः। त्वन्तु वाचा वाङ्मात्रेण प्रीतिं विशदयसि केवलसन्देशं संप्रेष्य मां प्रीणयसि। मे नाग्रतस्सन्निधत्से न पुरो दृश्यसे। अतः पुंसामन्तरङ्गं कुसुमाच्छादितं वज्रमणिमेव मन्ये वज्राभिन्नं जानामीत्यर्थः। अत्र विशेषणानां साभिप्रायत्वात्परिकरालङ्कारः। वज्राभेदप्रतिपादने कुसुमपिहितत्वरूपाधिक्यस्य प्रदर्शनादधिकाभेदरूपकम्। तृतीयपादवाक्यार्थस्य चतुर्थपादवाक्यार्थं प्रति हेतुत्वकल्पनाद्वाक्यार्थहेतुकं काव्यलिङ्गं। तथा मन्यइत्युत्प्रेक्षावाचकसत्त्वात् नाथस्य सन्देशप्रेषणानागमनाभ्यां व्यज्यमानेन बाह्यमार्दवसहितान्तःकाठिन्यवत्वेन निमित्तेन सकलपुमन्तरङ्गे कुसुमाच्छादितकठिनवज्रत्वोत्प्रेक्षा चेत्येषां संसृष्टिः॥

त्यक्तुं प्राणान् त्वरयति मुहुस्त्वद्वियोगव्यथा मां।
शापोदन्तः क्रकच इव मामन्तरेव क्षिणोति॥
औदास्यं ते मम न सहते जीवितं जीवितुं मे।
हस्तालम्बं वितरति पुनर्दर्शनेच्छा तवैका॥ २४॥

त्यक्तुमिति—त्वद्वियोगव्यथा कर्त्री प्राणान् त्यक्तुं मां मुहुस्त्वरयति मरणसङ्कटं जनयतीत्यर्थः। शापोदन्तश्शापवृत्तान्तः क्रकचइव करपत्रइव मां अन्तरेव क्षिणोति आन्तरमर्मच्छेदनव्यथां जनयतीत्यर्थः। ते तवौदास्यं मत्परित्यागरूपं ममजीवितं प्राणनं न सहते त्वत्कृतमौदास्यमालोच्य झडिति प्राणत्याग एव वरमिति बुद्धिरुदेतीति भावः। तथाप्येका तव पुनर्दर्शनेच्छा तावत् जीवितुं किञ्चित्कालपर्यन्तं प्राणान् धर्तुं मे हस्तालम्बं वितरति बहूनां मारकसामग्रीणां सत्त्वेपि 'जीवन् भद्राणि पश्यति' इति न्यायमालोच्य त्वत्पुनर्दर्शनाशयैकया जीवामि नान्यथेतिभावः॥

द्रष्टुं दृष्टिः प्रचलति मनः कर्षति ध्यातुमन्तः ।
निर्निद्रा धीर्वशयति तनुः क्षीयते त्वामलब्ध्वा ॥
दिव्यान् भोगानपि मम रुचिर्द्वेष्टि लज्जाप्रवासा ।
दुन्मत्ताऽसं नविदितमथो मूर्छितावान्यथा वा ॥ २५ ॥

अथ—दृङ्मनःसङ्गसङ्कल्पाः जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ताः इत्यनङ्गदशा दश ॥

इति कविभिस्तत्रतत्र वर्ण्यमाना दशाप्यवस्थाः कविरत्रैकेनैव श्लोकेन प्रदर्शयति द्रष्टुमिति—हे नाथ! त्वां द्रष्टुं चित्रे विलिख्य त्वां द्रष्टुमित्यर्थः । दृष्टिर्मदीयं चक्षुः प्रचलति निरन्तरं त्वां द्रष्टुमिच्छामीत्यर्थः । एतेन चक्षुः प्रीतिर्दर्शनसङ्कल्पश्चोक्तौ भवतः । मनः त्वां ध्यातुमन्तः कर्षति निरन्तरं मनसि त्वामेव ध्यायामीत्यर्थः । एतेन मनस्सङ्ग उक्तः । निर्निद्रा निद्रारहिता धीर्मद्बुद्धिः त्वां वशयति स्ववशे करोति । निद्रामपि विहाय निरन्तरं त्वदासक्तेत्यर्थः । एतेन जागरावस्था प्रदर्शिता । तनुर्मच्छरीरं त्वामलब्ध्वा क्षीयते कृशीभवति । एतेन कार्श्यमुक्तंभवति । मम रुचिरिच्छा दिव्यान् भोगानपि द्वेष्टि तेषुप्रीतिं न करोतीत्यर्थः । उक्तमेवेदं मदीये भैमीपरिणयनाटके नायिकायाः वियोगावस्था प्रदर्शनप्रस्तावे "नो वीणां समुपैति पञ्जरशुकीं दृष्ट्वापि नालोकते न स्नाने न विलेपने न कुसुमे नाक्षेच धत्ते मतिं" इति । एवंविधास्मीति भावः । एतेन अरतिरुक्ता भवति । लज्जायाः प्रवासाद्देशान्तरगमनात् लज्जात्यागादित्यर्थः । हेतौपञ्चमी । उन्मत्ताऽऽसं "तदुदितस्स हि यो यदनन्तरः" इति न्यायेन लज्जात्यागोन्मादयोरत्र हेतुहेतुमद्भावो द्रष्टव्यः । एतेन ह्रीत्यागोन्मादौ प्रदर्शितौ भवतः । अथो तदनन्तरमहं मूर्च्छिता वा अन्यथा वा मृता वा न जानं इति शेषः । तयोर्द्वयोरप्यैहिकज्ञानवैकल्यादिति भावः । अत्र कविरश्लीलत्वदोषानवकाशार्थं मूर्छितावा मृतावेति पाठं परित्यज्य मूर्छितावान्यथावेत्युक्तवानिति ज्ञेयम् ॥

दृष्टे ध्यानात्त्वयि दिशिदिशि च्छिद्यते हृत्पुटं मे।
सन्देहो मे गलति निखिलः क्षीयते कर्म सर्वं।
कामास्सर्वे हृदयगलिताः निश्चयाथाऽमृतत्वा।
दत्त्वैवाहं तव सुखमयं सत्यमैकात्म्यमापम् ॥ २६ ॥

दृष्टइति—हे नाथ! त्वयि ध्यानाद्दिशिदिशि दृष्टे भ्रान्त्या वीक्षिते सति मे हृत्पुटं हृदयान्तर्भागः छिद्यते अदृश्यस्याकस्मिकदर्शनेन स्तम्भप्रलयरोमाञ्चादिसात्त्विकभावानुत्पाद्य हृदयं स्वयमपि प्रक्षुभ्य स्फुटतीव भवतीति यावत्। अन्यत्र त्वयि परमात्मनि ध्यानात्तैलधारावत्सन्तताविच्छिन्नप्रत्ययात् दिशिदिशि अणुरेणुतृणकाष्ठादिषु दृष्टे 'सर्वं खल्विदं ब्रह्म' इति प्रत्ययविषयीकृते सति मे हृत्पुटं हृदयग्रन्थिः हृदयग्रन्थिर्नाम दुर्मोचग्रन्थिवत् हृदयं सन्निरुध्य स्थिताः अविद्याजनितरागद्वेषाभिनिवेशास्मितादिरूपाः ये हृदयगुणाः तत्समुदायरूपः। स च छिद्यते भिद्यते नाशं प्राप्नोति। ब्रह्मसाक्षात्कारे सति सर्वे चाविद्यावासनामयाः संस्काराः प्रणश्यन्तीति भावः। मे मम सन्देहः प्रियप्राप्तिर्भवेद्वा न वेत्यादिः गलति प्रत्यक्षगतत्वादिति भावः। अन्यत्र ब्रह्मसाक्षात्कारेऽसति अहं ब्रह्मास्मि वा न वेत्याद्यविद्याजनितस्सर्वोऽपि प्रत्ययः प्रणश्यतीत्यर्थः। सर्वं कर्म क्षीयते अश्रुमोचनप्रियप्रतिकृतिलेखनादिव्यापारस्सर्वोऽपि विरमतीत्यर्थः। अन्यत्र इह जन्मनि जन्मान्तरे वा कृतानि फलानारम्भकाणि यानि सञ्चितानीत्युच्यन्ते, यानि चोत्तरोत्तरोत्पत्स्यमानानि आगामीनीत्युच्यन्ते, तत्समुदायस्सर्वोऽपि "ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा" इति न्यायेन प्रशान्तो भवतीत्यर्थः। श्रूयते च "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति। किञ्च कामास्सर्वे हृदयगलिताः किं वेषान्तरेण प्रियमन्विष्यामि किमुत चित्रे विलिख्य साक्षात्करोमि किमथवा कयाऽपि मूलिकया निद्रामासाद्य स्वाप्निकेन प्रियेण सङ्गमिष्य इत्यादिमनोरथास्सर्वेऽपि शान्ताः आसन् इत्यर्थः। अन्यत्र वेदार-

म्भणगुरुशुश्रूषणपत्नीपरिग्रहपुत्रोत्पादन गृहारामक्षेत्रार्जनाग्निहोत्रारम्भण गङ्गास्नानमूर्तिपूजनवेदान्तविचारश्रवणमनननिदिध्यासनयोगाभ्यासादिषु ऐहिकामुष्मिकसाधनेषु अभिलाषाः हृदयान्निरस्ताः भगवत्साक्षात्कारस्य सकलविकल्पविच्छेदकत्वादिति भावः । अहं एषाऽहन्ते प्रियतमा अथ निर्भया सती अमृतत्वात् अमृत्वा जीवितत्वात् अत्रैव अस्मद्गृहान्तश्शयनागार एव तव सुखमयं सम्भोगानन्दप्रचुरं ऐकात्म्यं सम्भोगकालसम्भावितैकशरीरत्वमापम् । तथाच त्वद्दर्शनमात्रेण त्वत्सङ्गमसुखमन्वभवमित्यर्थः । अन्यत्र अथ वेदारम्भणादि सकलकार्मविच्छेदानन्तरं अहं संसारिभावनाभावितान्तःकरणावच्छिन्नचैतन्यरूपोहं अमृतत्वात् मरणस्वभावं परित्यज्य नित्यस्वभावं प्राप्तत्वात् अत्रैव देशान्तरकालान्तरादिनियममनपेक्ष्य एतच्छरीरावच्छेदेनैवानुभूयमानब्रह्मोपासनावेलायामेव तव परमात्मनः सुखमयं ब्रह्मानन्दरूपं ऐकात्म्यमन्त्यन्तसादृश्यरूपमैक्यं आपं ब्रह्मीभूतोस्मि क्रिमिकीटन्यायेनेति भावः । श्रूयतेच—यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथमर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते " इति । "यथानद्यस्स्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः निरञ्जनः परमं साम्यमुपैति " इति । अत्र प्रकृतनायिकावृत्तान्ते वर्ण्यमाने विशेषणसाम्यादप्रकृतयोगिनीवृत्तान्तस्य गम्यत्वात्समासोक्त्यलङ्कारः । "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्" इति लक्षणात् ॥

कस्त्वां क्वापि स्थितमुपचरेत्कोऽनुगच्छेद्व्रजन्तं ।
को वा पृच्छेत्कुशलमसकृद्व्याधितं बाधितं वा ॥
एकाकी सन् निवससि कथं बन्धवस्ते हताः किं ।
कष्टंकष्टं विधिविलिखितं केन शक्यं प्रमार्ष्टुम् ॥ २७ ॥

इदानीं स्वकान्तस्यापि दुर्दैवमनुशोचति कइति— क्वाप्यदृष्टपूर्वे वनान्तराले स्थितं त्वां क उपचरेत् न कोपीत्यर्थः । व्रजन्तं कुत्रचित्प्रयान्तं कः

अनुगच्छेत् न कोपीत्यर्थः। व्याधितं बाधितं वा तारकादित्वादितच्। एतादृशं त्वां असकृत्पुनःपुनरागत्य कोवा वैद्यस्सखा वा कुशलं पृच्छेन्न कोपीत्यर्थः। असहायः एकः एकाकी तादृशस्सन् कथं निवससि। एकाकिनस्ते दूरस्थितिरपायकारिण्येवेतिभावः। ते तव बन्धवोऽस्मदादयः हताः प्रणष्टाः किं नहिनहि त्वद्विरहेपि हतजीवितं धारयाम एवेत्यर्थः। कष्टंकष्टं! तव दूरवर्तनं अस्मदादेः प्राणधारणं चेति द्वयमप्यतीव दुःखावहमिति भावः। अथवा युक्तमेवेदं। विधिविलिखितं प्रमार्ष्टुमन्यथयितुं केन शक्यं स्यान्नकेनापीत्यहो तवचास्माकं च दुर्दैवफलमिदमिति निर्वेदातिशयः। लोकोक्तिरलङ्कारः "लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते" इति तल्लक्षणात्॥

पत्रन्यासैरलकरचनैः प्रापितासं विनोदं।
छायेव त्वामनुसृतवती लालितासं त्वयाऽहम्॥
मध्ये काले विरहविपदा व्याहतं वैभवं मे।
हाहा! दैवं भुवि न सहते दीर्घसौख्यं जनानाम्॥ २८॥

पत्रन्यासैरिति—पत्रन्यासैर्मत्कपोलादिषु मकरिकापत्रलेखनैः अलकानां चूर्णकुन्तलानां रचनैरलङ्करणैश्च त्वया विनोदं कालयापनोपायं प्रापिता आसं। छायेव त्वामनुसृतवती अहं त्वया नानाविधैश्चित्तोल्लासनैः लालिता विनोदिता आसमभवं। मध्येकाले एवं किञ्चित्कालसुखानुभवावस्थायामेव विरहविपदा मे वैभवं सर्वमपि व्याहतं नाशितमभूत्। हाहेति खेदे। दैवं दुर्विधिः जनानां दीर्घसौख्यं चिरानुभाव्यमानन्दं न सहते सद्य एव नाशयतीत्यर्थः। दैवायत्तं मत्कष्टमभूत् न पुरुषदोषादिति भावः। अत्रार्थान्तरन्यासः लोकोक्त्यलङ्कारश्च उपमया संसृष्टः॥

कैलासाद्रौ स्थितिमगणयन् तापसीभूय भूयः।
मर्त्यस्त्रीणां मुखकमलकश्रीर्दिदृक्षुः किमासीः॥

नो चेदेवं वद कितव मे तेषु कस्मादकार्षीः ।
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ २९ ॥

इदानीं पत्युर्दूरवर्तनाद्धेतोः कमपि कामुकभावमनुमाय तमधिक्षिपति कैलासेति—हे कितव धूर्त परस्त्रीपरत्वाभिमुखेतियावत् । कैलासाद्रौ यक्षरक्षोगणाक्रान्तत्वादविविक्तस्थान इतियावत् । स्थितिमगणयन्ननिच्छन् तापसीभूय अतापसोऽपि तापसोभूत्वा रावणसन्न्यासिवेषमाश्रित्येत्यर्थः । भूयः पुनः पुनः मर्त्यानां मृत्तिस्वभावानां या स्त्रियस्तासां अल्पानि मुखकमलानि मुखकमलकानीत्यल्पार्थेकन् । अल्पत्वं तु कान्त्या प्रमाणेन जरया चेति भावः । तादृशमुखकमलकस्य श्रीश्शोभाः दिदृक्षुर्द्रष्टुमिच्छुः । दृशोस्सन्नन्तादुप्रत्ययः । नलोकेत्यादिना षष्ठीप्रतिषेधः । तादृशः आसीः किं? दिव्यस्त्रीसंसेव्यमानस्य तवेदमनुचितमित्यर्थः । एवं नोचेदन्यथा यदि मे वद मह्यं प्रत्युत्तरं देहि । तेषु कस्मादकार्षीः । केषु किमकार्षमिति कर्माधिकरणयोर्जिज्ञासा चेच्छ्रूयतां "स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु" इति । अत्र स्निग्धच्छायातरुष्विति विशेषणेन कामोपभोगानुकूलत्वं द्योत्यते । रामगिर्याश्रमेष्विति विशेष्येण स्वकृतकपटतापसत्वगोपनार्थं पुण्याश्रमस्थितिरिरिति व्यज्यते । वसतिं स्थानमकार्षीरित्यनेन मुग्धाल्पमानुषीवञ्चनार्थं समयं प्रतीक्षमाणस्तत्र चिरमवात्सीरित्याद्यर्थास्सुधीभिरुन्नेयाः । कविरत्रमेघसन्देशप्रथमश्लोकान्त्यपादपूरणं एवंकृतवानिति विच्छित्तिविशेषोवगन्तव्यः । अत्र स्निग्धछायातरुष्विति विशेषणस्य रामगिर्याश्रमेष्विति विशेष्यस्य च साभिप्रायत्वात् परिकरपरिकराङ्कुरौ संसृज्येते ॥

कष्टंकष्टं कथमहमहो कान्तमध्यक्षिपं तं ।
मोक्तव्ये मद्विधिविलिखिते किं स कुर्यान्महात्मा ॥
क्षन्तव्याहं दयित भवता मा प्रकुप्यन्तु साध्व्यः ।
दुःखार्तानां वचसि विवशे गृह्यते केन दोषः ॥ ३० ॥

इदानीं स्वस्यैमनस्यात्सम्पातायातां पतिव्रताविरुद्धां च पतिनिन्दां पर्यालोच्य खिद्यन्ती स्वोक्तमधिक्षिप्य समाधत्ते कष्टंकष्टमिति—अहं स्वप्नेपि पतिविरुद्धभाषामजानतीति तदर्थः। तं सर्वदा मदनुकूलत्वेनानुभूतं कान्तं आकारेण गुणैश्च मनोहरं प्रियं कथमध्यक्षिपं आक्षिप्तवत्यस्मि। तादृशं न किञ्चिदप्यस्ति अतोऽहमेव मूढास्मीति भावः। कष्टंकष्टं पतिनिन्दासाहसमिदं अत्यन्तदुःखावहमित्यर्थः। अहो कदाप्यनङ्कुरितस्य निन्दोद्यमस्य सद्योदर्शनादाश्चर्यं मद्विधिविलिखिते मत्पूर्वसञ्चितकर्मफले भोक्तव्ये भोगोन्मुखतामुपयाते सति स महात्मा किङ्कुर्यात् मत्कर्माधीना तद्दूरगमनप्रवृत्तिरभूदित्यर्थः। हे दयित भवता क्षन्तव्याहं अनालोच्य दोषाभ्यूहनापराधादिति भावः। साध्व्यः पतिव्रताः माप्रकुप्यन्तु मदुक्तौ दोषान्नगणयन्तु कुतस्तत्राह दुःखार्तानामिति दुःखार्तानां विवशे दुःखकाले स्वयमौचित्यानौचित्यमनालोच्य निर्गते वचसि केन दोषः गृह्यते नकेनापीत्यर्थः। अतो दुःखपरवशाया मया यद्यदुक्तं तन्न दोषायेति भावः। अत्र पूर्वश्लोके स्वोक्तायाः पतिनिन्दायाः अनेन श्लोकेन दुःखार्तानामिति विचारपूर्वकं प्रतिषेधादाक्षेपालङ्कारः॥

उत्सार्यन्ते श्वसितपवनैर्देहलीधूलयो मे।
प्रक्षाल्यन्ते गृहधरणयः प्रत्यहं बाष्पसेकैः॥
भित्तेश्चित्रं भवति विकृतं स्विन्नगात्रानुषङ्गैः।
लूतातन्तुप्रकरनिचिताः मञ्चकास्ते मनोज्ञाः॥ २१॥

अथेदानीं दशभिश्श्लोकैर्नाथविरहितस्य स्वगृहस्यावस्थां प्रदर्शयति उत्सार्यन्तइति—श्वसितपवनैर्देहलीधूलयः अलिन्दोपान्तपतितरजांसि उत्सार्यन्ते परिमृश्यन्ते विरहव्यथाप्रवृत्ताः दीर्घाश्च मन्निश्वासमारुताः शोधिनीकार्यं कुर्वन्तीति भावः। गृहधरणयः गृहान्तःप्रदेशाः अहन्यहनि प्रत्यहं प्रतिदिनं अव्ययं विभक्तीत्यादिना अव्ययीभावः। अनश्चजिति टच्। बाष्पसेकैः

प्रक्षाल्यन्ते मद्विच्छिन्नरोदनाश्रुपाताः दैनन्दिनगृहसम्मार्जनं कुर्वन्तीति भावः। भित्तेर्भवनकुड्यस्य सम्बन्धि चित्रं पुरातनदिव्यचरित्रावगमनार्थं लेखितमालेख्यजातं स्विन्नगात्रानुषङ्गैः विरहव्यथोत्पन्नस्वेदवच्छरीरसम्पर्कैः विकृतं विवर्णमुषितञ्च भवतीत्यर्थः। ते तव मनोज्ञाःमञ्चकाः लूतानां तन्तुवायक्रिमीणां येतन्तवस्तेषांप्रकरेण निचिताः व्याप्ताःभवन्ति। इदानीं त्वया मया चानुपयुज्यमानत्वादेवं गृहशोभा प्रणष्टेति भावः ॥

नाहारेऽपि प्रणयति मनश्शारिकादारिकासौ ।
तुच्छं पुच्छं नमयति शिखी शोकमूकीकृतोयम् ॥
शश्वत्सिक्ताप्यनिशमयते शुष्कतां पुष्पवाटी ।
क्षामच्छायं भवनमधुना त्वद्वियोगेन नूनम् ॥ ३२ ॥

नेति—शारिकायाः गृहशुक्याः असौ दारिका त्वत्परिपोषितमिदं स्वचपत्यं आहारेऽपि यद्भावेप्राणरक्षणं न भवेत्तादृशि मृदुमधुरजम्बूफलदाडिमीबीजक्षीरान्नाद्याहारेऽपि मनः न प्रणयति न योजयति त्वद्दर्शनाभावप्रयुक्तव्यथयेति भावः। अयमेष शिखी च त्वद्बोधितया मया तालैस्सिञ्जावलयसुभगैः नर्तितः इदानीं शोकमूकीकृतस्सन् पुच्छं स्वबर्हभारं तुच्छं विकृतंयथातथा न मयति नोर्ध्वमुखं प्रसारयति त्वदर्शनव्यथयेति भावः। नमयतीत्यत्र नमेरमन्तत्वेन मित्वात् मितां ह्रस्वइतिह्रस्वः। पुष्पवाटीत्वद्गृहपुष्पवाटी शश्वत्पुनःपुनः सिक्तापि जलसेकादिना सादरं प्रवर्ध्यमानाऽपि शुष्कतां शुष्कीभावमयते नपल्लविता पुष्पिता वा भवति। सापि त्वद्विपत्तिमन्तस्संज्ञया ज्ञात्वा खिद्यतीति भावः। "अन्तस्संज्ञा भवन्त्येते तरुगुल्मलतादयः" इति विष्णुपुराणे। अतएवाधुना त्वद्वियोगेन भवनं क्षामच्छायं भवति नूनं सत्यमित्यर्थः। मेघसन्देशे गृहवर्णनप्रस्तावे "क्षामच्छायंभवनमधुनामद्वियोगेननूनं" इत्युक्तम्। अत्रतु त्वद्वियोगेनेति युष्मच्छब्दविनिमयमात्रेण विच्छित्तिरुपदर्शितेति ध्येयम् ॥

रक्ताशोकस्तव विरहतस्तप्यते केसरश्च ।
द्वौ मुञ्चन्तौ परिणतिपतत्पाण्डुपत्राश्रुबिन्दून् ॥
प्रोद्यच्छाखासमुदयभुजालिङ्गितान्योन्यगात्रौ ।
काकारावैः प्ररुदित इव प्राप्तकाकुप्रकारैः ॥ ३३ ॥

पूर्वं तावत् "रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः" इत्यादिना महावैभवं प्रदर्शितं । इदानीन्तु दैन्यं दर्शयति रक्ताशोकइति—रक्ताशोकः गृहाजिरोत्पादितः केसरश्च तव विरहतस्तप्यते शुष्कीभवति प्रभुनाशप्रयुक्तोयं शोषइति भावः । द्वौ पूर्वोक्तकेसररक्ताशोकौ परिणत्या परिपाकेन पतन्ति यानि पाण्डुपत्राणि तान्येवाश्रुबिन्दूनिति रूपकं । तान्मुञ्चन्तौ सन्तौ प्रोद्यन्तीनामुन्नमन्तीनामूर्ध्वमुखानामितियावत् । शाखानां समुदय एवभुजास्तैरालिङ्गितान्योन्यगात्रौ च सन्तौ प्राप्तकाकुप्रकारैः उपगतविकृतध्वनिविशेषैः काकारावैः नतु भ्रमद्भ्रमरसम्भ्रमकोकिलकुलकोलाहलैः प्ररुदितइव प्ररोदनं कुरुत इवेति रूपकसमुत्थापितेयमुत्प्रेक्षा । लोके हि यथा बन्धुजनविरहितौ अन्तस्तप्यमानावश्रुपातपूर्वकमन्योन्यमालिङ्ग्य विकृतस्वरैः प्ररुदितस्तद्वदिति भावः ॥

कीर्णैर्जीर्णैररुणकमलैः प्राप्तकाषायवेषा ।
शैवालौघैर्बिसपरिचितैश्शीर्षतः कीर्णकेशा ॥
पद्माक्षौघैः परिवृततनुर्भस्मितालङ्क्रियाऽसौ ।
वापी चापि व्यथयति मनो दीनकात्यायनीव ॥ ३४ ॥

अथ विलासवापीदशां प्रदर्शयति कीर्णैरिति—जीर्णैरत एव समन्तात्कीर्णैः अरुणकमलैः कोकनददलैः प्राप्तकाषायवेषा अन्यत्र काषायवसनाच्छादिता बिसपरिचितैः धवलकमलनालसंमिलितैः शैवालौघैः शीर्षतः कीर्णकेशा आपादतलमस्तकं प्रलम्बमाननीलशुक्लकचकलापवती विशेषणद्वयेन कात्यायिन्यर्धवृद्धास्यात्काषायवसनापिचेति तत्स्वरूपं प्रदर्शितं भवति । पद्माक्षौघैः परिणत-

कमलबीजैः अन्यत्र कमलाक्षमालाभिः परिवृततनुः भस्मिता नाशिता अन्यत्र भस्मसम्मिलितेतियावत्। तारकादित्वादितच्। तादृश्यलक्ष्मिया यस्याइति अत्र पद्माक्षेतिरुद्राक्षाणामप्युपलक्षकं, भस्मितालक्ष्मियेति लिङ्गात्। एवञ्च विष्ण्वाराधनकाले तस्याः पद्माक्षमालाधारणं शिवपूजाकाले रुद्राक्षधारणमिति तत्त्वं। एतादृशी असौ वापी दीनकात्यायिनीव भिक्षार्थं गृहाद्गृहमटन्ती सेव मनो व्यथयति। एवं ते विलासवापी दीनावस्थां गमितेति भावः। श्लिष्टोपमा ॥

अस्मद्भोगोद्यमघुमघुमत्कन्दराऽऽवासकाले।
सानुक्रोशं सभयमपि मां सानुषु क्रीडयित्वा॥
यानि प्रौढान्यसकृदकरोर्वृत्तवृत्तानि तानि।
क्रीडाशैलस्स्मरयति मया त्वद्रहस्सङ्गतानि ॥ ३५ ॥

अथ क्रीडाशैलवृत्तान्तमाह। अस्मदिति—आवयोर्यः भोगोद्यमः सुखानुभवानुकूलगन्धपुष्पताम्बूलैलालवङ्गकस्तूरीहिमवालुकादिसुगन्धिद्रव्यनिवेशनसम्भ्रमः तेन घुमघुमन्ती या कन्दरा गुहा तत्र आवासकाले आवयोः स्थितिकाले सानुक्रोशं सदयं सभयञ्च यथातथा मसृणगिरिप्रस्थात्पतेत् पादप्रतिघातो भवेद्वेति चिन्तयेति भावः। सानुषु मां क्रीडयित्वा सञ्चार्य यानि प्रौढानि रहस्सङ्गतानि असकृदनेकवारान् अकरोः तानि त्वद्रहस्सङ्गतानीति कर्मनिर्देशः। क्रीडाशैलः स्वगृहोपान्ते विहारार्थं कल्पितो गिरिः कर्ता मया स्मरयति सोत्कण्ठमहं तं स्मरामीत्यर्थः। अत्र स्मरयतीत्यत्र स्मृआध्यान इति मित्संज्ञया मितां ह्रस्वइति ह्रस्वः। मयेत्यत्र गति बुद्धीत्यादिना न कर्मत्वं, स्मृतेर्बुद्धिविशेषत्वात् गतिबुद्धीत्यादौ बुद्धेस्सामान्यज्ञानपरत्वस्य शास्त्रज्ञैर्विवक्षितत्वाच्चेति ज्ञेयम् ॥

बाहोर्मूले पिहितनयनं पाणिसम्प्रेषणं यत्।
व्यावृत्तायां मयि मम बलाच्चुम्बनं यन्मुखस्य ॥

क्रीडाकोपेऽप्यसकृदपि ते ये प्रणामाश्च तानि ।
क्रीडाशैलस्स्मरयति मया त्वद्रहस्सङ्गतानि ॥ ३६ ॥

यानि प्रौढानि रहस्सङ्गतानीत्युक्तं तान्येव विवृणोति बाहोरिति—बाहोः पराङ्मुखस्थितायाः मे बाहोरित्यर्थः । मूले मत्कक्षान्तराले पिहितनयनं यथातथा बाहुसम्प्रेषणमिति यत् एकेन करेण मन्नयने पिधाय करान्तरेण स्तनग्रहणाशया एकबाहुप्रवेशनमिति यावत् । मयि व्यावृत्तायां सत्यां तदा बलाद्बलात्कारेण मम मुखस्य चुम्बनमिति यत्, किञ्च मम क्रीडाकोपेपि ते असकृदपि प्रणामाश्च ये तानि तद्रूपाणि त्वद्रहस्सङ्गतानि क्रीडाशैलः स्मरयति मयेति पूर्ववदर्थः ॥

आरोप्याङ्के हरिणपृथकान् बाहुनाऽऽसज्य कण्ठे ।
घासग्रासैस्स्वकरकलितै र्यान् पुराऽवर्धयस्त्वं ॥
आबध्नन्तो नयनसलिलं त्वामदृष्ट्वा समन्तात् ।
पित्रा हीनाश्शिशवइव ते दीनदीनाश्चरन्ति ॥ ३७ ॥

अथ गृहहरिणावस्थां प्रदर्शयति आरोप्येति—हे नाथ! त्वं यान् हरिणपृथकान् अङ्के पद्मासनीकृते स्ववामाङ्के आरोप्य शाययित्वा बाहुना कण्ठे आसज्य स्ववामभुजेन तत्कण्ठमालिङ्ग्येत्यर्थः । स्वकरकलितैर्घासग्रासैः किञ्चित्किञ्चित्प्रदीयमानबालतृणमुष्टिभिः अवर्धयः अपत्यनिर्विशेषमपोषयः तएते हरिणशावकाः त्वामदृष्ट्वा नयनसलिलं आबध्नन्तस्सन्तः पित्रा हीनाश्शिशवइव दीनदीनाः अत्यन्तदैन्यं प्राप्तास्सन्तः समन्तात् सर्वत्र त्वदावासस्थलेषु चरन्ति । तत्रतत्र त्वामन्विष्यन्तस्सन्तः सदैन्यं खिद्यन्तीति भावः । स्वभावोक्तिः ॥

कान्तो भर्ता कठिनहृदये किं त्वयासीन्निरस्तः ।
तेनाहोस्विच्चपलमतिना त्वं निरस्ता किमासीः ॥

एकाकिन्याः स्थितिरिह तव प्रायशश्शङ्कनीये-
त्यज्ञाः खिन्नामसकृदपि मां पारवेश्यस्तुदन्ति ॥ ३८ ॥

त्वया विना मे गृहस्थितिरेवाशक्यैत्याह कान्तेति—पारवेश्यः सन्निहितपरगृहवासिन्यः अणन्तात्ङीप् । परिचितस्त्रिय इति यावत् । आगत्येतिशेषः । हे कठिनहृदये सखि कान्तोभर्ता वयस्सौन्दर्यसौशील्यादिसद्गुणैः मनोहरः त्वद्भरणकर्ता च एतादृशस्ते पतिः त्वया निरस्तः आसीत्किं? कञ्चित्कलहमुत्थाप्य कमपि दोषमारोप्यापमत्य निर्वासितः किमिति प्रश्नः बहुदिनादारभ्य तदागमनाभावात् तवापि तदन्वेषणोद्यमाभावाच्चेति भावः । आहोस्विदथवा चपलमतिना तेन त्वं निरस्ता आसीः किं त्वद्रोगालम्बुद्धया स्त्र्यन्तरचापल्येन च त्वां परित्यज्य क्वापि गतःकिमिति प्रश्नार्थः । एकाकिन्याः असहायायाः तव इहान्तःपुरे स्थितिः प्रायशः विशेषाकारेण शङ्कनीया । "नैकाकिनी वसेद्गेहे नासहाया पथि व्रजेत् । नोपांशु भाषयेदन्यं नाशक्तापि परं स्पृशेत्" इतिस्त्रीधर्मशास्त्रमुल्लङ्घ्य एकाकिन्याः रूपयौवनशालिन्याश्च तवैकान्तस्थितिः कामपि शङ्कां जनयतीति भावः । इत्येवंप्रकारेण भाषमाणाः अज्ञाः शापवृत्तान्तानभिज्ञास्ताः खिन्नां पूर्वमेव त्वद्वियोगव्यथितां मामपि अतिशुद्धामपि तुदन्ति क्षतेःक्षारसेचनेनेव असह्यवेदनां कुर्वन्तीत्यर्थः । काव्यलिङ्गोज्जीवितस्वभावोक्तिरलङ्कारः ॥

अप्यायातस्स्वमुदवसितं वः प्रभुर्नस्सखेति ।
द्वास्थानेत्य प्रतिदिनमपि प्रातरापृच्छमानाः ॥
शोकान्मूके सति परिजने श्वासमुष्णं वहन्तो ।
नत्वा गेहं नमितवदना बन्धवस्ते प्रयान्ति ॥ ३९ ॥

अथ बन्धूनां विचारणपरतां विशिनष्टि अपीति—हे नाथ! ते बन्धवः प्रतिदिनमपि प्रातःप्रभाते द्वास्थान् बहिर्द्वारपालकान् एत्य प्राप्य अन्तःप्रवे-

शस्यानुचितत्वादिति भावः। वःप्रभुः स्वामी नस्सखाच एतद्गृहपतिरित्यर्थः। अप्यायातः ह्यःरात्रौ किमायातः इतिअपिःप्रश्ने इतिआपृच्छमानास्सन्तः आङि पृच्छेरित्यात्मनेपदाल्लटश्शानच्। परिजने शोकान्मूकेसति नेत्युत्तरापेक्षया मौनमेवोत्तरमिति शुचा तूष्णींभावं गते सतीत्यर्थः। उष्णं श्वासं वहन्तः सख्युरनागमनजनितान्तस्तापादुष्णंदीर्घं च निश्वसन्तइति यावत्। गेहं नत्वा मित्रगेहिनीगौरवादिति भावः। नमितवदनाः विनयात् मित्रादर्शनशोकाच्चेति भावः। प्रयान्ति यथागतं गच्छन्तीत्यर्थः॥

कोशाध्यक्षः प्रभुमनुगतो रत्नकण्ठस्य पुत्रः।
चित्रग्रीवः शृणुत गृहिणीं स्वर्णमालां विहाय॥
हृत्वा काञ्चित्क्वचन निरगादित्यसौ कापि वार्ता।
कर्णात्कर्णं प्रविशति पुरे किं करोमि क्व यामि॥ ४०॥

इदानीं भर्तुश्शीघ्रमागमनार्थं पुरप्रवादं प्रदर्शयति कोशाध्यक्षइति— अये! शृणुतास्मत्पुरे कोशाध्यक्षः राजराजसन्निधौ नवानां निधीनामपि आयव्ययाधिकारी प्रभुं महाराजं कुबेरं अनुगतः सर्वदा तत्सन्निधानवर्ती महागौरवशालीति यावत् रत्नकण्ठस्य तन्नामकस्य महात्मनो यक्षस्य पुत्रः महावंशजातइत्यर्थः। चित्रग्रीवः तन्नामकोऽस्मन्मध्यवर्ती यक्षः कर्ता। गृहिणीं स्वगृहसर्वस्वभूतां "गृहिणीगृहमुच्यते" इतिन्यायादिति भावः। स्वर्णमालां सुवर्णमालावन्मनोहारिणीमित्यर्थः। विहाय परित्यज्य पत्नीपरित्यागपापमप्यनालोच्येति यावत्। काञ्चित् हृत्वा काञ्चिदित्यनेन अनामधेयां दुश्शीलां वा गृहीत्वेति द्योत्यते। क्वचन निरगात् कस्यापि मुखमदर्शयन् तयासह निष्क्रान्तः। अहो! कामपरतन्त्रत्वमिति भावः। इत्यसौ कापि वार्ता अज्ञातमूलः कोऽपि कल्पितवृत्तान्तः पुरेऽस्मिन्पत्तने कर्णात्कर्णं प्रविशति अतिरहस्यत्वेन प्रतिजनं श्रूयमाणा वर्तते किङ्करोमि क्वयामीति परितापातिशय-

निवेदनम् । एवं दुर्जनैः प्रवादः परिकल्पितः, अन्योपि प्रकल्प्येत, अतस्तन्मुख मुद्रणार्थं त्वया शीघ्रमागन्तव्यमिति परमार्थः । अत्र मेघसन्देशानभिहितमपि यक्षदम्पत्योर्नामधेयं यक्षीयमधिकारं तज्जनकनामधेयञ्च प्रदर्शितमिति ध्येयम् ॥

अङ्गेनाङ्गं विशसि यदि मे चेतसा चिन्तयन्मां ।
तेन श्रीमंस्तव मयि दृढा प्रीतिरस्तीत्यहृष्यम् ॥
साहं गातुं तव सुचरितं साहसादेत्य वीणां ।
हित्वा नामग्रहणमपि ते मूर्छिताऽऽसं कृतघ्ना ॥ ४१ ॥

अथैकादशभिः श्लोकैः प्रियां प्रति यक्षेण येये सन्देशाः प्रेषिताः तस्य तस्य यथोचितमुत्तरं दर्शयति । तत्रादौ अङ्गेनाङ्गमित्यारभ्य तनुना गाढतप्तेनेत्यादिविशेषणविशिष्टेन मदीयाङ्गेन तादृशं त्वदीयाङ्गं विशामीत्यादि यदुक्तं तत्रोत्तरमाह अङ्गेनेति—हे श्रीमन् । त्वं तावत् चेतसा मां चिन्तयन् सन् त्वदीयाङ्गेन मदीयाङ्गं विशसि यदि तेन कार्येण मयि विषये तव दृढा प्रीतिः अस्तीति मत्वा कार्यात्कारणमनुमेयमिति न्यायादिति भावः । अहृष्यं त्वदनुग्रहपात्रत्वादिति भावः । सा तावद्धार्ष्ण्यरहिता अहन्तु तव सुचरितं गातुं साहसाद्वीणामेत्य वीणोद्वहनसामर्थ्याऽभावेपि कृच्छ्रेण वीणामुत्सङ्गे निवेश्येत्यर्थः । ते तव नामग्रहणमपि हित्वा त्वदीयस्मरणजनितशोकावेगात् वीणया त्वन्नामधेयमप्युच्चारयितुमप्यसामर्थ्यं प्राप्य मूर्छिता आसं अतएवकृतघ्ना च आसं त्वन्तु सङ्कल्पेनापि मां सङ्गन्तुं समर्थोसि । अहन्तु मूर्छया त्वन्नामग्रहणमपि कर्तुमसमर्थास्मीत्यहो कृतघ्नास्मीति भावः ॥

शब्दाख्येयं यदतिविशदं गोपयन् तत्सखीभ्यः ।
कर्णाभ्यर्णे चिरमकथयस्स्प्रष्टुकामो मदास्यं ॥
उद्धृत्याहं श्रवणमधरे योजयन्ती कपोलं ।
यत्तेऽश्रौषं किमपि लपितं चेतसा तत्स्मरामि ॥ ४२ ॥

मेघसन्देशे 'शब्दाख्येयं' इत्यारभ्य रसास्वादनानुकूलः योयो भावः प्रदर्शितः तंतमनूद्य स्वोत्तरं दर्शयति शब्दाख्येयमिति—यद्वाक्यमतिविशदं श्वस्सन्ध्याकाले शिवमालोक्यागच्छावेत्यादि। अतएव शब्दाख्येयं सर्वजनसमक्षं स्वानुपूर्व्या वक्तुमुचितं तत् सखीभ्यः गोपयन् सख्यः यथा न शृणुयुः तथा रक्षन् सखीसमक्षं वक्तुमनर्हरहस्यार्थकत्वेन ज्ञापयन्नित्यर्थः। भीत्रार्थानामितिपञ्चमी। मदास्यं स्प्रष्टुं कामोयस्य तुम् काममनसोरिति मकारलोपः। कर्णाभ्यर्णे चिरमकथयः मदाननस्पर्शलोभात् मच्छ्रवणोपान्ते बहुकालपर्यन्तं किमप्युपदिशन्निवाभूरित्यर्थः। अहं त्वदीयरहस्याभिज्ञा अहं तु मदीयं श्रवणमुद्धृत्य कपोलमधरे योजयन्ती तवानुकूल्यकल्पनार्थं श्रवणोन्नमनपूर्वकं मत्कपोलं त्वदधरेण स्पर्शयन्ती सतीत्यर्थः। ते तव यत्किमपि लपितं अस्पष्टाक्षरमनन्वितं च गदितं तद्वाक्यं चेतसा स्मरामि। इयाननुरागः क गतइति चिन्तयामीत्यर्थः। अत्र परस्परप्रेमातिशयरूपो रतिः उक्तैस्साधारणीकृतैश्च भावान्तरैरभिपोष्यमाणः अलौकिकरसात्मकतामेत्य सहृदयैः चर्व्यतइति ध्येयम्॥

श्यामास्वङ्गं चकितहरिणीप्रेक्षणादौ च तत्त-।
न्मत्सादृश्यं क्वचिदपि न चेद्दर्शिता प्रीतिरेवम्॥
तां मां हित्वा तृणमिव कथं दूरदेशं गतोऽभूः।
तत्ते चित्तं व्यरचि कुसुमैः प्रस्तरैश्चेति मन्ये॥४३॥

श्यामास्विति—श्यामासु प्रियङ्गुलतासु, श्यामा तु महिलाह्वया, प्रियङ्गुः फलिनी फलीत्यमरः। अङ्गं मदङ्गसादृश्यं चकितहरिणीप्रेक्षणादौ च आदिशब्देन मेघसन्देशोक्तशशिशिखिवीच्यो ग्राह्याः तेषु पदार्थेषु तत्तन्मत्सादृश्यं क्रमेण वक्त्रच्छायाकेशपाशभ्रूविलाससास्यं न चेत् त्वदुक्तरीत्या नास्ति यदि प्रीतिः तव मयि विद्यमानं प्रीतिसर्वस्वमपि एवं दर्शिता अन्यत्र मत्सादृश्यनि-

षेधेन मध्यसदृशलावण्यव्यञ्जनद्वारा प्रेमातिशयः प्रदर्शित इत्यर्थः । तां तथा प्रीतिपात्रीभूतां मां तृणमिव हित्वा परित्यज्य कथं दूरदेशं गतोऽभूः तादृशप्रेम्णः विरुद्धमेतदित्यर्थः। तत्तस्मात्कारणात् तथा प्रेमप्रदर्शनविरुद्धाचरणात्मकादुभयरूपात्कारणादित्यर्थः । ते तव चित्तं चेतः कर्म कुसुमैः प्रस्तरैश्शिलाभिश्च व्यरचि निरमीयत इति मन्ये। प्रेमातिशयप्रदर्शनान्मृदुकुसुमनिर्मितत्वं क्षणमप्यपरिहार्यां प्रियां विहाय दूरदेशगमनात् तन्मनसः कठिनशिलानिर्मितत्वं चोत्प्रेक्षितमिति भावः । तथाचोत्प्रेक्षाद्वयस्य समप्राधान्यसङ्करः । सच तृणमिवेत्युपमया सह संसृष्टश्चेति ज्ञेयम् ॥

धारासक्तैररिमिव शरैर्बाधते त्वामनङ्गः ।
त्वय्यासक्तां द्विगुणितरुषा हन्ति चैकाकिनीं माम् ॥
आवां युक्तौ यदि स मदनो नैव माहन्तुमीष्टे ।
सङ्घे बुद्धिर्यदि विचलति स्यात्परस्यावकाशः ॥ ४४ ॥

धारेति—अनङ्गो मन्मथः धारासक्तैस्तीक्ष्णाग्रभागसम्बद्धैः शरैस्स्वाशुगैः त्वां रूपेण स्वजेतारं अरिमिव बाधतइत्युपमा । त्वयि तदरौ आसक्तां एकाकिनीं तव दूरगतत्वादसहायिनीमेकां मां द्विगुणितरुषा हन्ति च शत्रुपक्षीयत्वादिति भावः । अतएव प्रत्यनीकालङ्कारः "प्रत्यनीकं बलवतश्शत्रोःपक्षे पराक्रमः" इति लक्षणात् । आवां नायिकानायकौ युक्तौ परस्परसंसक्तौ यदि स मदनः एवमाहन्तुं प्रहर्तुं नेष्टे न शक्नोति। समवायो दुरत्यय इति न्यायादिति भावः । तदसामर्थ्यकारणमाह सङ्घइति, सङ्घे स्वव्यूहे बुद्धिः विचलति यदि परस्परैकमत्यं नश्यति यदि तदा परस्यावकाशः स्यात् तथाच परस्परविघटनादावयोरेवं सन्तापस्सञ्जात इति भावः । अत्र वैधर्म्येण दृष्टान्तो लोकोक्तिश्चेति ताभ्यां सह उपमाप्रत्यनीकालङ्कारयोश्चेति चतुर्णां संसृष्टिः ॥

मामालिख्य प्रणयकुपितां नेक्षिताभूस्त्वमस्रैः ।
स्वप्ने वाहं क्षणमपि भवत्सङ्गमिच्छामि यावत् ॥
तावन्निद्रा प्रवसति मया प्रार्थ्यमानापि सत्यं ।
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ४५ ॥

मामिति—हे नाथ! त्वं प्रणयकुपितां मां आलिख्य धातुरागैः शिलायामिति शेषः । अस्रैः तत्कालप्रसृतैरश्रुभिः ईक्षिता नाभूः अस्राणां दर्शनप्रतिघातकत्वादिति भावः । अहं तु स्वप्ने वा क्षणमपि यावत् भवत्सङ्गमिच्छामि तावन्निद्रा मया प्रार्थ्यमानापि प्रवसति दूरंगच्छति तदभावात्स्वप्नेपि वा भवत्सङ्गो दुर्लभोऽभूदित्यर्थः । अतः स्वप्नेपि क्रूरः कृतान्तः नौ आवयोः सङ्गमं न सहते सत्यं त्वदुक्तं सत्यमित्यर्थः । अत्र कविः मेघसन्देशोक्तचतुर्थपादपूरणं एवं कृतवानिति ज्ञेयं । भावप्रधानोयं श्लोकः ॥

मामाकाशप्रणिहितभुजः श्लिष्यसि स्वप्नलब्धां ।
देवी निद्रा त्वयि सकरुणा भाग्यमेतत्तवास्ते ॥
उन्निद्राहं दिशिदिशि समालोक्य ते रूपधेयं ।
गाढाश्लेषोद्यतभुजलता त्वामनासाद्य लज्जे ॥ ४६ ॥

मामिति—हे नाथ! त्वं आकाशप्रणिहितभुजस्सन् स्वप्नलब्धां मां श्लिष्यसि आलिङ्गसि अतस्त्वमेव धन्यः । देवी भगवती निद्रा त्वयि विषये सकरुणा वर्तते स्वप्नद्वारा तव आनुकूल्यकल्पनादिति भावः । एतद्भाग्यं स्वाप्निकप्रियापरिरम्भणानन्दरूपं तव आस्ते । अहं तु उन्निद्रा निर्निद्रा सती दिशिदिशि ते तव रूपधेयं रूपं त्वदाकारमिति यावत् 'नामरूपभागेभ्यो धेयस्स्वार्थे वाच्यः' इति स्वार्थे धेयप्रत्ययः । समालोक्य भ्रान्त्या विलोक्य गाढाश्लेषे उद्यते उद्धृते भुजलते यस्स्यास्तादृशी सती त्वां अनासाद्य लज्जे मद्दशा एवं वर्ततइति निर्वेदातिशयः ॥

भित्त्वासद्यः किसलयपुटान् वान्तु वातास्समन्तात् ।
स्नात्वा झर्यां कदशनमदन् निद्रितो वाऽस्यनिद्रः ॥
माऽऽलिङ्गयन्तां मदनुसृतये ते तुषाराद्रिवाताः ।
शीतार्तिस्त्वां त्यजतु भगवान् शङ्करोऽव्यात्भवन्तम् ॥४७॥

भित्त्वेति—किसलयपुटान् सद्यः भित्त्वा वातास्समन्तात् वान्तु पल्लवच्छेदजनितपरिमळयुक्ताः वायवस्सर्वत्र सञ्चरन्त्वित्यर्थः । झर्यां गिरिनदीप्रवाहे शीतोदकइति यावत् । स्नात्वा कदशनं कन्दमूलादि कोः कत्तत्पुरुषेऽचीति कद्वादेशः । अदन् भक्षयन् निद्रितः संजातनिद्रः तदस्य सञ्जातमितीतच् । अनिद्रः निद्रारहितः असि वा । एवं भूतेन त्वया मदनुसृतये मदनुसरणार्थं ते पूर्वोक्ताः तुषाराद्रिवाताः अतिशीतला हिमवाताः मालिङ्गयं तां शीतार्तिः शीतबाधा त्वां त्यजतु प्रार्थनायां लोट् । भगवान् षड्गुणैश्वर्यसंपन्नः शङ्करः शिवः त्वामव्यात् आशिषि लिङ् । तथाच स्वैरप्रवृत्तिं विहाय नियमेन देहं रक्षेति मुख्योर्थः॥

सङ्क्षिप्योक्तिं रजनिदिनयोर्विस्मर स्वं वियोगं ।
सर्वेषां नस्त्वमसि शरणं त्वं कथं निश्शरण्यः ॥
शुश्रूषुर्वा निजगुरुजनान् गेहमायाहि तूर्णं ।
सन्यस्तानामिव तव कथं वन्यवृत्या व्यथैषा ॥४८॥

संक्षिप्येति—रजनिदिनयोः उक्तिं त्रियामा कथं सङ्क्षिप्येत अहरपि कथं मन्दमन्दातपं स्यादित्यादिरात्रिदिववृत्तान्तं सङ्क्षिप्य तत्कथनाद्विरम्य स्वं स्वकीयं वियोगं विस्मर सकलविकल्पानां मानसाधीनत्वादिति भावः । सर्वेषां गुरुजनानां बन्धुजनानां अस्मदादिगृहजनानाञ्च नः अस्माकं त्वमेव शरणं रक्षकोसि । त्वं कथं निश्शरण्यः सशरेण्यएवेत्यर्थः । त्वां साधु रक्षितॄणां गुरुजनानां बन्धुजनानां च सत्त्वाहिति भावः । तथा च मे चेतः त्वद्वियोगव्यथासिरशरणं कृतमिति यत्सन्दिष्टं तदनुचितमेवेति तात्पर्यं । किं तैः

दूरगतैरित्यतआह शुश्रूषुरिति । निजगुरुजनान् शुश्रूषुस्सन्त्वं तूर्णं मेहमायाहि त्वद्वियोगेन तेऽपि बहुधा तप्यन्ते तत्सेवनार्थं वा समागत्य त्वयि गृहे स्थिते सति आवयोरुभयोरपि व्यथा किञ्चिद्धीयेतैव अत इति भावः । सन्यस्तानां सन्यासिनामिव वने भवाः वन्याः कन्दमूलादिपदार्थाः तैर्वृत्त्या जीवनेन या व्यथा सैषा तव कथं । सन्यासिनां तु ब्रह्मानुसन्धानार्थं सुखदुःखे निर्जित्य वन्यवृत्या वर्तनमुचितं । तवतु मद्वियोगासहिष्णोस्तदेतदनुचितमिति भावः । अतस्तदेतदालोच्य शीघ्रमायाहीति मुख्योऽभिप्रायः ॥

नन्वेषाहं तव वचनतो मागमं कातरत्वं ।
त्वं च श्रीमन् मम गतिमनुस्मृत्य मागाः विषादम् ॥
दुःखी जातोऽस्म्यविदितसुखोस्मीति धैर्यं लभेथाः ।
चित्तेऽधीने सपदि समतां याति दुःखं सुखं च ॥४९॥

नन्विति——ननु भोः प्राणनाथेति संबोधनं एषाहं त्वद्दिदृक्षाधृतजीविताहमित्यर्थः । तव वचनतः "तत्कल्याणि त्वमपि नितरां मागमः कातरत्वं" इति त्वत्सन्देशरूपादित्यर्थः । कातरत्वं भयचपलत्वं मागमं नप्राप त्वद्दाश्रवत्वादिति भावः । हे श्रीमन् त्वं च त्वमपि मम गतिमनुस्मृत्य विषादं दुःखं मागाः किन्तु दुःखी दुःखस्वभाववान् ताच्छील्ये णिनिः । जातोस्मि अविदितसुखोऽस्मि जन्मारभ्य सुखस्वरूपमेव न जानामि इति एवं निश्चित्येत्यर्थः । धैर्यं निश्चयात्मिकां बुद्धिं लभेथाः चित्ते अनुसन्धानात्मके चेतसि अधीने निगृहीते सति अनुसन्धानाभावे सतीत्यर्थः । सद्यः दुःखं सुखं च समतां याति तयोर्भेदज्ञानमेव नोदेतीत्यर्थः । तथाच सुखदुःखादीनां अनुसन्धानविकाररूपत्वादनुसन्धानाभावे यथा जलाभावे फेनबुद्बुदतरङ्गादिविकाराः न दृश्यन्ते तथा सर्वेऽपि ते विकाराः नानुभूयन्तइति भावः ॥

शापान्तस्ते भवति हि हरौ शेषशय्यां जिहाने ।
धास्ये तावत्कथमहमसून् लोचने मीलयित्वा ॥
अद्य श्वो वा प्रबलविरहात्प्राणभङ्गो यदि स्यात् ।
निर्वेक्ष्यावः कथमिव सखे तन्तमात्माभिलाषम् ॥ २० ॥

शापान्तइति—हे सखे! प्राणप्रिय हरौ श्रीमन्नारायणे शेषशय्यां जिहाने सति उत्थानद्वादश्यां सत्यां ते तव शापान्तः भवतिहि भवतिखलु । तावत् अद्यारभ्य मासचतुष्टयपर्यन्तं अहं लोचने मीलयित्वा असून् इमान् हतप्राणान् कथं धास्ये धारयिष्यामि । एवञ्च "शेषान् मासान् गमय चतुरः लोचने मीलयित्वा" इति त्वदादेशानुसरणमशक्यमेवेत्यर्थः । कुतस्तत्राह अद्येति—अद्यास्मिन्दिने वा श्वोवोत्तरदिनेवा प्रबलविरहात् असह्यवियोगादिति हेतौ पञ्चमी । प्राणभङ्गः आवयोरेकतरस्य द्वयोर्वा प्राणहानिः स्याद्यदि तदा तन्तमात्माभिलाषं "निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु" इति त्वदुक्तरीत्या कथं निर्वेक्ष्यावः अनुभविष्यावः । सतिकुड्ये चित्रकर्मेतिन्यायेन तदभावात्तदभावएवेति भावः । तथाच एतादृशान् सन्देशानवलम्ब्य मा व्यलम्बयः किन्तु सद्यस्समायाहीति मुख्योर्थः ॥

भूयो दृष्टः कितव रमयन् कामपि त्वं मयेति ।
स्वाप्नं वृत्तं मदभिहितमालोच्य रुष्टोसि नूनम् ॥
ज्ञातं तत्त्वं पदकमलयोस्सन्निपत्याद्य याचे ।
क्षान्त्वा सर्वं मदपचरितं देहि मे सन्निधानम् ॥५१॥

भूयइति—हे कितव! त्वं कामपि मदन्यां सुन्दरीं रमयन् मया दृष्टोसि इति स्वप्नेमेवं स्वाप्नं वृत्तं यन्मया जागरित्वा अभिहितं तद्भूयः पुनः इदानीमिति यावत् । आलोच्य इयं मद्दोषशङ्किनीति ज्ञात्वा रुष्टोऽसि नूनं सत्यं अत एव दूरं गतोसीति भावः । तत्त्वं ज्ञातं सन्देशव्याजेन गूढस्वा

भिकवृत्तप्रकाशनमिदं मदपराधज्ञापनार्थमेव न त्वभिज्ञानप्रेषणार्थमिति तत्त्वम् ज्ञातमित्यर्थः । एतद्दोषपरिहारार्थं अथेदानीं पदकमलयोस्सन्निपत्य त्वां प्रणम्य याचे प्रार्थये । मदपचरितं मदपराधं सर्वमपि क्षान्त्वा मे सन्निधानं सामीप्यं देहि शीघ्रं मत्सन्निधिमायाहीत्यर्थः ॥

अद्यैवाहं तव शुभमभिप्रार्थये नाथ हर्षात् ।
साधें मासे यदि मम दृशोर्गोचरत्वं न यायाः ॥
वाचो वह्नौ मृगयतु भवान् वातमध्ये ममासून् ।
चक्षुस्सूर्ये शशिनि हृदयं व्योम्नि मे पापिजीवम् ॥५२॥

एवमेकादशानां प्रियसन्देशानां क्रमेणोत्तरमुक्त्वा इदानीमेकेन स्वकर्तव्यमाह अद्येति—हे नाथ! अहमद्यैव जीवद्दशायामेव हर्षात् तव शुभमभिप्रार्थये त्वमेको वा सुखीभूया इत्याशासे। कुत एवमित्यत आह सार्धेति। सार्धे मासे श्रावणकृष्णामाऽपगमे सति मम दृशोर्गोचरत्वं न याया यदि मत्समीपं नागच्छेर्यदि तदा भवान् मम वाचः वह्नौ मृगयतु मृतप्राणाः स्वकारणेषु निलीयन्तइति शास्त्रादिति भावः। एवमुत्तरत्रापि तत्तत्कारणे तत्तद्विलीयत इति ज्ञेयं। वातमध्ये ममासून् मृगयतु चक्षुस्सूर्ये मृगयतु शशिनि हृदयं मनो मृगयतु व्योम्न्याकाशे मे पापिजीवं मृगयतु पापीति विरहासहनोक्तिः। श्रूयते च "यत्रास्य पुरुषस्य अग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रं पृथिवीग् शरीरं आकाशमात्मा औषधीर्लोमानि वनस्पतीन् केशा अप्सु रोहितश्च रेतश्च निधीयते" इति । तथा च निर्दिष्टकाले नायास्यसि चेत् सद्यएव म्रियइति मुख्योर्थः ॥

एतत्सर्वं कथय भगवन् त्वत्सखप्रत्ययार्थम् ।
वाचा किञ्चिद्विधिकृतमभिज्ञानमेकं मदास्ये ॥
अन्तर्गूढं विरचय विभुं श्रावयेर्यावदेत- ।
द्गुप्तो मन्त्रः प्रभवति हि भूगोपितात्मेव बीजम् ॥५३॥

इत्थं स्वाभिप्रायं मेघे निवेद्य वाग्रूपाभिज्ञानं प्रदास्यन्ती तत्परिग्रहार्थं मेघं प्रार्थयते एतदिति—हे भगवन् पूज्य मेघराज एतत्सर्वं 'सत्यं यस्य प्रियतम इव' इत्यारभ्य एतत्पर्यन्तं यद्यन्मया विज्ञप्तं तत्सर्वं कथय मत्प्राणनाथाय विज्ञापय। तत्र सखा सत्सखः, राजाहस्सखिभ्यष्टजिति टच्प्रत्ययः, तस्य प्रत्ययार्थं विस्रम्भार्थं किञ्चित्सङ्क्षिप्तं विधिकृतं मद्दुर्दैवात्सम्भूतं अभिज्ञानमेकं वाचा वाग्रूपेण प्रदास्ये त्वत्कर्णे कथयामीत्यर्थः। एतदभिज्ञानं विभुं मत्स्वामिनं यावच्छ्रावयेस्तावदन्तर्गूढं गुप्तं निरत्वय। कुतस्तत्राह गुप्तइति। हि यस्मात्कारणात् गुप्तो मन्त्रः प्रभवति कार्यक्षमो भवति। अन्यथा "षट्कर्णो भिद्यते मन्त्रः" इति न्यायेन प्रतिकूलो भवतीत्यर्थः। यथा भुवि भूम्यन्तराले गोपितः उप्त्वा मृदाच्छादितः आत्मा तनुर्यस्य तत्। तादृशं बीजं प्रभवत्यङ्कुरति तद्वित्युपमा। तथाच कार्यात्पूर्वं प्रकाशने दोषसत्त्वात् गुप्तमन्त्रसदृशं मदभिज्ञानं यत्रकुत्राप्यप्रकाशयन् तत्कर्णे प्रापयेति मुख्योर्थः॥

सन्ध्याकाले प्रतिदिनमपि प्राप्तसिंहासनायाम्।
भर्तुर्नृत्तं सह परिजनैस्सन्दिदृक्षौ भवान्याम्॥
दूताहूतो धनपतिरपि प्राभृतानि प्रगृह्णन्।
सख्युस्स्नेहात्प्रथमतरमायाति सन्ध्यासभां ताम्॥५४॥

अथेदानीं सप्तमिश्श्लोकैः वैश्रवणदत्तशापस्वरूपं धनपतिक्रोधकारणं शापस्य वर्षभोग्यत्वं च इत्येतत्त्रयं अभिज्ञानप्रदानव्याजेन प्रदर्शयति सन्ध्येति—अत्रास्मत्पुरे प्रतिदिनमपि सन्ध्याकाले प्राप्तसिंहासनायां सिंहासनारूढायामित्यर्थः। भवस्य पत्नी भवानी तस्यां राजराजेश्वर्यामित्यर्थः। इन्द्रवरुणभवेत्यादिना आनुगागमो ङीष् च। परिजनैस्सकलदेवतासमूहैस्सह भर्तुर्नटराजस्य नृत्तं सात्विकाङ्गिकवाचिकाहार्यकैः अभिनयैश्चतुर्विधं नाट्यं सन्दिदृक्षौ सत्यां दूताहूतो धनपतिरपि प्राभृतान्युपायनानि। प्राभृतं तु प्रदेशनं। उपायनमुपग्राह्य

मित्यमरः । प्रगृह्णन् सन् "रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुं" इति न्यायेनेति भावः । सख्युः परमेश्वरस्य सम्बन्धी यस्स्नेहः तस्माद्धेतोः तां सन्ध्यासभां प्रति प्रथमतरं स्वेतरागमनात्पूर्वमेव आयाति । प्रथमतरमित्यनेन अतिस्नेहभावो भक्तिभावश्च व्यज्यते । एवं प्रतिदिनसम्प्रदायोऽत्र वर्तत इति मुख्योऽर्थः ॥

कादाचित्के दिवसविगमे यक्षराट् शङ्करार्थं ।
मालां काञ्चित् सपदि रचयेत्यादिदेश प्रियं मे ॥
तावद्दैवाद्रहसि मिलितां मां परिष्वज्य सोयम् ।
मन्दंमन्दं किमपिकिमपि व्याहरन् मत्परोऽभूत् ॥५५॥

कादाचित्कइति—कदाचिद्भवः कादाचित्कः तत्रभव इत्यण् । तादृशे दिवसस्य अह्नो विगमे विरतौ सन्ध्याकालइत्यर्थः । यक्षराट् कुबेरः शङ्करार्थं शङ्करं सम्भावयितुमित्यर्थः । काञ्चिन्मालां पुष्पमालिकां सपदि सद्यः रचयं ग्रथयेति मे मम प्रियमादिदेश आज्ञापितवान् । तस्मिन् दिने उपायनमध्ये मालिकामदृष्ट्वा कालातिक्रमशङ्कया तथोक्तवानित्यर्थः । तावदिति मन्नाथः दूरंगत्वा यावन्मालाग्रथनोपकरणानि सज्जीकरोति तावदेव सोयं मन्नाथः दैवात् भवितव्यताबलात् रहसि मिलितां काकतालन्यायेन समागतां मां परिष्वज्य मन्दंमन्दं किमपिकिमप्यव्यक्ताक्षरं वचनं व्याहरन्नभिदधानस्सन् मत्परोऽभूत् मय्येव निवेशितबुद्धिरासीदित्यर्थः ॥

राज्ञोऽनुज्ञां तदनु मयि संस्मारयन्त्यां प्रसङ्गात् ।
ग्रथ्नन् मालां सरभसमुपश्लोक्यमानो मयाऽसौ ॥
सद्यःक्लृप्तां सुरभिकुसुमैः मालिकामादरान्मे ।
कण्ठे कृत्वा क्षणमपनयन् प्रैषयद्यक्षराजे ॥५६॥

राज्ञइति—तदनु तदनन्तरं मयि प्रसङ्गात् कथानुषङ्गप्रसङ्गसङ्गतिवशात् राज्ञोऽनुज्ञां संस्मारयन्त्यां 'त्वरितं मालाग्रथने राजाज्ञाऽऽसीत्किल किं

मेवं विलम्बसे' इति ज्ञापयन्त्यां सत्यां सरभसं सवेगं यथातथा मालां ग्रथ्नन् असौ मत्प्रियः मया उपश्लोक्यमानः अनितरसाधारणमिदं तव मालाग्रथन-चातुर्यमिति श्लाघ्यमानस्सन् सुरभिकुसुमैः सद्यः क्लृप्तां मालिकां क्षणं क्षण-काले आदरान्मे कण्ठे कृत्वा मत्कण्ठमलङ्कृत्येत्यर्थः। अपनयन्सन् किमेव-मकार्यं कृतवानस्मीति भयात् यःकोपि पश्येदिति भयाच्चेति भावः। यक्ष-राजे कुबेराय प्रैषयत् प्रपूर्वकादिष गतावित्यस्माद्धातोर्णिजन्तात्कर्तरि लङ्॥

सोऽपि श्रीमान् तुरगवदनैर्वाह्यमानोपहारः।
शम्भोस्सेवापरवशमतिस्तूर्णमागात्समाजम्।
पाणिस्पर्शात्सकलहरणं पार्वतीशोऽनुगृह्णन्॥
मालां हित्वा प्रियसखमुखं सस्मितः पश्यति स्म॥५७॥

स इति—स श्रीमान् धनपतिरपि तुरगवदनैर्यक्षैः तुरङ्गवदनोमयुरित्य-मरः। वाह्यमानोपहारः परिजनयक्षगणोपरिनिवेशितोपायनभारस्सन् शम्भोः सेवापरवशमतिस्सन् तूर्णं समाजं सन्ध्यासभामागात्। पार्वतीशः नटराजः सकलहरणं समस्तान्युपायनवस्तूनि सुदायोहरणं च तदित्यमरः। पाणिस्प-र्शादनुगृह्णन् एकैकमुपायनमपि पाणिना स्पर्शंस्पर्शं तमनुगृह्णानस्सन् मालां हित्वा अस्पृष्ट्वा निर्माल्यमिति ज्ञानादिति भावः। प्रियसखमुखं यक्षराजा-स्यं सस्मितस्सन् पश्यति स्म। स्वस्य सर्वज्ञत्वादिति भावः॥

तस्मिन् काले सदसि धनदो व्रीडसङ्कोचितात्मा।
ध्यात्वा किञ्चित् सकलमपि मन्नाथकृत्यं विदित्वा॥
यन्मूलोऽभूत्तव खलु! मदश्चापराधश्च तस्याः।
सङ्गे शीर्णे सपदि शतधा शीर्यतामित्यशाप्सीत्॥५८॥

तस्मिन्निति—तस्मिन्काले तत्तदशापारम्भवकालइत्यर्थः। सदसि सु-रासुरयक्षरक्षोगन्धर्वादि सम्मिलितायां सभायां धनदः व्रीडेन लज्जया सङ्को-

न्तिः आत्मा मनो यस्य तादृशस्सन् आकस्मिकः कोयमपमान इति व्यथमानस्सन्निति यावत्। किञ्चिद्ध्यात्वा प्रणिधानयोगेन ज्ञास्यामीदमित्यनुचिन्त्य ततो मन्नाथकृत्यं मदनुरागमदर्पितमालिकाप्रेषणरूपं सकलमपि विदित्वा हे खलु दुष्ट चित्रग्रीव! तव मदः अपराधश्च यन्मूलोऽभूत् यत्परायत्ततया एवमपचारमकार्षीः तस्यास्सङ्गे सति सपदि तत्क्षणमेव तव शीर्षं शतधा शीर्यतामित्यशाप्सीत् शापं दत्तवानित्यर्थः ॥ अत्र—

"योगिनौ द्विविधौ प्रोक्तौ युक्तयुञ्जानभेदतः।
युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ॥"

इति शास्त्रानुसारेण, ध्यात्वा किञ्चित्सकलमपि मन्नाथकृत्यं विदित्वेत्यनेन धनपतेर्ध्यानसहकृतवेदनप्रदर्शनादयं युञ्जानो योगीत्यवगम्यत इति वेदितव्यम् ॥

श्रुत्वा शापं हततनुमिमां दग्धुमग्नौ पतन्तीम्।
रुद्ध्वा राज्ञी सपदि धुरि मां सर्वसम्पद्दयार्द्रा ॥
यक्षेशाङ्घ्र्योर्दुहितरमिवापातयत्स प्रसीदन्।
पत्युश्शापं निरवधि मथो वर्षभोग्यं व्यतानीत् ॥६९॥

अथ शापस्य स्वमूलकं वर्षभोग्यत्वं दर्शयति श्रुत्वेति—शापं श्रुत्वा इमां हततनुं शापवशात्पतिसंसर्गशून्यतया व्यर्थमिदं मच्छरीरं दग्धुमग्नौ पतन्तीं मामालोक्येति शेषः। दयार्द्रा सर्वसम्पत् तदाख्याराज्ञी कुबेरपत्नीत्यर्थ। सपदि धुरि पुरोभागे रुद्ध्वा मामग्निप्रवेशान्निरुध्य यक्षेशाङ्घ्र्योः दुहितरमिवापातयत् यथा माता पत्युः पादयोः दुहितरं प्रणमयति तद्वदित्युपमा। अथो स धनपतिः प्रसीदन् मयि प्रसन्नभावमापन्नस्सन् पत्युर्मद्भर्तुः निरवधिं शापं वर्षभोग्यं एकवत्सरमात्रानुभाव्यमतानीदकरोत्। अत्र वर्षभोग्यत्वकरणं प्रति प्रसादस्य प्रसादं प्रति प्रणमनस्य प्रणमनं प्रति दयार्द्रत्वस्य दयार्द्रत्वं प्रति

अग्निप्रवेशस्य अग्निप्रवेशं प्रति शापश्रवणस्य च कारणत्वकल्पनात् कारणमालालङ्कारो गम्यः । गुम्भः कारणमालास्याद्यथाप्राक्प्रान्तकारणैः इति लक्षणात् ॥

तावद्घोरा रजनिरजनि त्रासहेतुर्ममाऽद्यः ।
तावच्छम्भोरवसितमभूत्ताण्डवोज्जृम्भणं तत् ॥
काले तस्मिन् प्रचलति जने क्वापि सोपि व्यचालीत् ।
अद्याप्येष प्रभुरिह पुरे नैव केनापि दृष्टः ॥६०॥

तावदिति—तावत् यावद्देवं वैश्रवणः प्रसन्नोऽभूत्तावति कालएव आद्यः मम त्रासहेतुः मत्प्रथमभयकारणरूपा एतावत्पर्यन्तं भयलेशस्याप्यननुभूतत्वादिति भावः। अतएव घोरा सकललोकभयङ्करत्वेन ज्ञाता रजनी रात्रिरजनि जाता तावत् यावत्सन्ध्यालक्षणानि साकल्येन विगलितानि तावत्काले शम्भोर्महानटस्य तत्तथाप्रसिद्धं ताण्डवोज्जृम्भणं अवसितमभूत् समाप्तमासीत्। तस्मिन् काले नाट्यपर्यवसाने जने द्रष्टृलोके प्रचलति सति यथायथं गतेसति सोपि मन्नाथश्च क्वाप्यचालीत् यत्रकुत्रवा गतोऽभूत्। एष प्रभुः इह पुरे अद्यापि केनापि नैवदृष्टः किमुत मयेति भावः। तथाच तदारभ्य तद्वियोगावस्थामनुभवामीति मुख्योर्थः ॥

एतद्वाचा निगदितमभिज्ञानमस्मै विवृण्वन् ।
दूरावासद्विगुणितमनोवैपरीत्यं विधून्वन् ॥
बन्धुप्रीत्या मयि घन! तमाश्वास्य सम्प्रेषय द्राक् ।
आयस्यापि प्रियजनहितं साधयन्त्येव सन्तः ॥६१॥

अभिज्ञानकथां निगमयति एतदिति—हे घन! त्वं वाचा निगदितं एतदभिज्ञानं धनपतिक्रोधकारणं तच्छापप्रकारश्चेत्युभयरूपं अस्मै मन्नाथाय विवृण्वन् विवृत्य कथयन् सन् दूरावासेन द्विगुणितं मनोवैपरीत्यं तन्मनोव्य-

थां विधून्वन् परिहारयंश्च सन् मयि बन्धुप्रीत्या बन्धुषु सोदरीसोदरादिषु या प्रीतिस्तादृशप्रीत्या तं मन्नाथं समाश्वास्य द्राक् शीघ्रं सम्प्रेषय। लोके सन्तः आयस्याप्यायासं प्राप्यापि प्रियजनहितं साधयन्त्येव। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। नन्वत्र शापवृत्तान्तस्य वागभिज्ञानत्वमेव न सम्भवति। तथाहि—वागभिज्ञानं नाम नायिकानायकमात्रगोचरः रहस्यवृत्तान्तः। यथा चित्रकूटे काककृतसीतास्तनकुट्टनवृत्तान्तः। प्रकृते तु बहुजनसङ्कीर्णे तादृशि महादेवसदसि वैश्रवणदत्तशापवृत्तान्तस्य सकलजनविदिततया रहस्यत्वाभावादितिचेन्न। विधिहरिहरेन्द्रादिभिरधिष्ठितायामतिगम्भीरायां महादेवसभायां तत्रापि ताण्डवोपक्रमकाले कस्यापि जनस्य किञ्चिदपि वागवकाशो नास्त्येव। अतएव भगवान् नटराजोपि निर्माल्यमाल्यार्पणकाले बहुप्रष्टव्येपि न किञ्चिदुक्त्वा प्रियसखमुखं सस्मितस्सन् दृष्टवान्। एवंस्थिते क्व कुबेरस्य शापाक्षरोच्चारणावकाशः क्वनु वा पुनः शापसङ्कोचवागुच्चारणादिश्चेति सर्वोप्ययं प्रसङ्गः तदात्वे अनुचिततमएव स्यात्। अतस्तदेतदुत्सृज्य एवं निश्चेतव्यं सस्मितावलोकनापमानितो धनपतिः राज्ञ्या सह दूरं गत्वा विविक्ते ध्यात्वा विज्ञाय मूलं सदारं चित्रग्रीवमानीय रे खलेति सम्बोध्य शापं दत्तवान्। ततो रत्नमालाग्निप्रवेशायोद्यता। महाराज्ञी तां निरुध्य स्वपतिपादयोः प्रणतिमकारयत्। प्रसादाद्राज्ञीगौरवाच्च स शापं समकोचयत् ततस्सभायां ते सर्वेपि पुनस्सम्मिलिताः। नाट्यावसाने स चित्रग्रीवः क्वापि गतोऽभूदित्येष सन्दर्भः अवश्यं वक्तव्य इति। तथाच शापवृत्तान्तः सभायां न केनापि ज्ञातइति रहस्यत्वेन अभिज्ञानत्वस्यानुपहतत्वमिति ज्ञेयम्॥

क्षन्तव्यस्स्यात्सकृदुपनतस्सेवकानां प्रमादो।
अर्थेत्युक्त्वा विरमति विभौ चन्द्रचूडे कदाचित्॥
लक्ष्मीकुर्वन् मनसि तव निर्माल्यमाल्यार्पणं तत्।
सस्मेरास्यो धनपतिरपि क्षान्तमेवेत्यवादीत्॥६०॥

एवं शापवृत्तान्तमुक्त्वा स्वभर्तारं प्रति तदनन्तरवृत्तान्तं निवेदयति क्षन्तव्यइति—हे नाथ! कदाचित् त्वद्गमनानन्तरं केषुचिद्दिनेषु गतेषु विभौ तत्वतत्त्वावधारणसमर्थे चन्द्रचूडे भगवति महेश्वरे सकृदेकवारमुपनतः प्राप्तः सेवकानां प्रमादः क्षन्तव्यः स्यात् प्रथमापराधः क्षमापणार्हः। इति एवं सामान्याकारेणोक्त्वा विस्मति सति, व्याङ्परिभ्यो रमइति परस्मैपदाच्छतृप्रत्ययः। धनपतिरपि अपिस्समुच्चये। तव तन्निर्माल्यमाल्यार्पणं मनसि लक्षीकुर्वन् त्वत्प्रथमापराधमुद्दिश्यैव भगवानेवं वदतीति निश्चिन्वन्। अतएव सस्मेरास्यस्सन् स्वयमपि सामान्याकारेण क्षान्तमेवेत्यवादीत्। एवं तयोरुक्तिप्रत्युक्तिकथा जातेत्यर्थः॥

शान्तः शापस्तव धनपतेः क्षान्तमेवेति वाचा।
तद्वेदत्वं भजति हि विभुर्लीलयाप्युच्चरेद्यत्॥
वृत्तान्तोयं तव न विदितो न प्रशान्तो ममाधिः।
द्विष्टे दैवे धृतमपि फलं शक्यते नैव भोक्तुम्॥६१॥

शान्तइति—धनपतेः क्षान्तमेवेति वाचा लोकरीत्या सामान्याकारेणोक्तेन तटस्थवाङ्मात्रेणापीत्यर्थः। तव शापश्शान्तः अभूत्। लोके प्रभुरधिपतिः लीलयापि यदुच्चरेत् तद्वेदत्वं भजति हि वेदवत्प्रमाणं भवतिखलु। अयं वृत्तान्तः शापक्षमापणवृत्तान्तः तव न विदितः त्वया नज्ञातइत्यर्थः। क्तस्य च वर्तमानइति षष्ठी। मम आधिर्मनोव्यथा न प्रशान्तः यदि क्षमापणवृत्तान्तः त्वया अज्ञासिष्यत तदा तूर्णमागमिष्यएव यद्यागमिष्यः तर्हि मन्मनोव्यथा अशमिष्यदेव तदभावात्तदभावइति भावः। दैवे फलप्रदादृष्टे द्विष्टे प्रतिकूले सति धृतं हस्तधृतमपि फलमाम्रादि भोक्तुं नैव शक्यते। लोकोक्त्यलङ्कारः॥

स स्याच्छार्ङ्गी भुजगशयनादुत्थितोऽनुत्थितोवा।
शापस्यान्तो धनपतिमुखेनोच्यतां नोच्यतां वा॥

शापान्तस्ते समजनि सखे! शङ्करोक्तेःप्रभावात्।
सामान्यादप्यधिकबलवत्स्याद्विशेषं हि शास्त्रम्॥६२॥

प्रकारान्तरेणापि शापपरिहारं द्रढयति स इति—स शार्ङ्गी शेषशायी हरिः भुजगशयनादुत्थितो वा अनुत्थितो वा स्यात् तदुत्थानकालस्य अनपेक्षणीयत्वादितोप्यधिकं दशमासान् स शेतामेवेत्यर्थः। शापस्यान्तः शापपरिहारः धनपतिमुखेन उच्यतां वा नोच्यतां वा शापः परिहृतइति विशेषाकारेण धनपतिस्स्वमुखेन ब्रवीतु वा मा वा। हे सखे! प्राणप्रिय शङ्करस्योक्तेः प्रभावात् प्रथमापराधः क्षन्तव्यः इति शास्त्रसमोपन्यासात् ते प्रथमापराधिनस्तव शापान्तस्समजनि शापः परिहृत इत्यर्थः। तत्रकारणमाह सामान्येति, सामान्यादपि सामान्यशास्त्रादपीत्यर्थः। विशेषं विशेषविधिविषयकं शास्त्रं शास्त्रविधिरित्यर्थः। बलवत् बलवत्तरं स्याद्धि स्यादेवेत्यर्थः। तथाच यस्य गृहं दिदृक्षुरित्यत्र कर्तृकर्मणोः कृतीति सामान्यशास्त्रेण गृहस्य दिदृक्षुरिति षष्ठ्यां प्राप्तायां न लोकाव्ययनिष्ठाखलर्थतृनामिति विशेषशास्त्रं उप्रत्ययान्ते कृति परे षष्ठी न भवतीति तां बाधते। ततः कर्मणि द्वितीयेति द्वितीयाप्राप्तौ गृहं दिदृक्षुरिति सिद्ध्यति। तद्वत् वर्षभोग्यश्शाप इति कुबेरवचनं क्षन्तव्यः प्रथमापराध इति भगवद्वचनेन बाधितमासीत्। अतः शापान्तस्ते समजनीति यदुक्तं तद्युक्तमिति भावः॥

दूरीभूतं दुरितमखिलं देवदेवप्रसादात्।
कालोऽतीतस्स खलु विषमो राजराजः प्रसन्नः॥
अस्मद्भाग्यं परिणतमभूदद्य नैवाभवस्त्वम्।
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः॥६३॥

इदानीं दैवानुकूल्यं दर्शयति दूरेति—हे नाथ! देवानां विधिहरिमहेन्द्रादिदेवानां देवःप्रभुस्तस्य महादेवस्य प्रसादात् तव दुरितमखिलं दूरीभूतं

परिहृतमभूत्। विषमस्स कालः अतीतः। राजराजः अस्मत्स्वामी प्रसन्नोभूत्। आवयोर्भाग्यमस्मद्भाग्यं सदृष्टमितियावत् परिणतं फलोन्मुखमभूत्। अथेदानीं त्वं वर्षभोग्येण भर्तुश्शापेन अस्तङ्गमितमहिमा नाशितप्रभावः नैवाभवः सर्वमप्यानुकूल्यमिदानीं तव सिद्धमासीदिति भावः। मेघसन्देशप्रथमपद्यद्वितीयपादपूरणमेवं कृतमिति ज्ञेयम्॥

प्रत्यागन्तुं चिरयसि कथं किं भयं का विशङ्का।
भर्तुर्भीतो न भवतु भवानागमे स प्रहृष्येत॥
नाथाहन्ते चिरपरिचिता नान्यथा शङ्कनीया।
साक्षी कश्चिद्दिवि विजयते सच्चरित्रे स्थितानाम्॥६४॥

इदानीमागमने न कोपि प्रतिबन्धइत्याह। प्रत्यागन्तुमिति—हे नाथ! प्रत्यागन्तुं पुनस्स्वगृहमागन्तुं कथं चिरयसि नविलम्बितव्यमेव। किं भयं राजा किं कारयेदिति भयमस्ति किं तत्र कार्यमेव। का विशङ्का मद्गेहिनी कीदृशी सञ्जातेति सन्देहः किमास्ते तदपि न कर्तव्यमेव। कुतस्तत्राह भवान् भर्तुः कुबेराद्भीतो न भवतु, आगमे त्वदागमने सति स राजा प्रहृष्येत् शापस्य परिहृतत्वादिति भावः। अहन्तु ते तव चिरपरिचिता बहुदिनादारभ्य मत्स्वभावं जानास्येवेत्यर्थः। अन्यथा "स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलं" इत्युक्तरीत्या गुणाधिकमनुरक्तवतीति न शङ्कनीया। सच्चरित्रे स्थितानां जनानां विषये साक्षाद्द्रष्टा साक्षी साक्षाद्द्रष्टरिसंज्ञायामिति इनिः। कश्चिद्दिवि द्युलोके विजयते सर्वान् सदसद्व्यापारान् पश्यन् सर्वं व्याप्यावतिष्ठत इत्यर्थः। श्रूयतेच "साक्षी चेता केवलो निर्गुणश्च" इति। तथाच मत्पातिव्रत्यविषये सकलजगद्द्रष्टा स भगवानेव साक्षीति भावः॥

सर्वं भद्रं समुदितमभूच्छान्तशापोसि भाग्या।
दावर्षान्तं क्वचन भवता नैव कालः प्रतीक्ष्यः॥

शापापायं प्रति तव मनस्सन्दिहानं यदि स्यात् ।
कर्तव्यं ते शृणु समुचितं विज्ञ! विज्ञापयामि ॥६५॥

हे नाथ! ते सर्वं भद्रं मङ्गलं समुदितं सम्भूयोत्पन्नमासीत् भाग्यात्त्वदीयपुण्यपरिपाकात्। शान्तशापोसि आवर्षान्तं उत्थानद्वादशीपर्यन्तं भवतात्वया क्वचनारण्यभागे नैव कालः प्रतीक्ष्यः॥ शापापायं प्रति शापपरिहारं प्रति तव मनस्सन्दिहानं सन्देहदोलायमानं स्याद्यदि हे विज्ञ! समुचितं कर्तव्यांशं विज्ञापयामि शृणु वक्ष्यमाणं श्रुत्वा वा दय.ेति मुख्यार्थः॥

सायंप्रातस्सवि.धभवने शङ्करं सेवमानः ।
कालेकाले पदकमलयो र्दर्शनं मे ददानः ॥
कञ्चित्कालं विषयविमुखश्चेतसाऽऽल..य धैर्यं ।
गेहे स्वीये गमयतु भवान् शेषकालं सुखेन ॥६६॥

विज्ञापनाप्रकारमाह सायमिति—हे नाथ! भवान् सायंप्रातः उभयोरपि सन्ध्ययोः सविधभवने विद्यमानं शङ्करं सेवमानस्सन् कालेकाले प्रतिसन्ध्याकालमित्यर्थः। मे मह्यं पदकमलयोर्दर्शनं ददानः तथाच यथा परमेश्वरः कालेकाले प्रणमन्तं त्वां स्वदर्शनदानेन कृतार्थयति तद्वन्मां कृतार्थयन्नित्यर्थः। कञ्चित्कालं उत्थानद्वादशीपर्यन्तं चेतसा धैर्यमालम्ब्य विषयेभ्यस्स्रक्चन्दनवनितादिभ्यः विमुखस्सन् शापपरिहारस्य त्वन्मनसि सन्धिग्धत्वेन एवं नियममनुवर्तयन्नित्यर्थः। शेषकालमवशिष्टदिनानि स्वीये गेहे सुखेन गमयतु गुरुशुश्रूषादेवतादर्शनमित्रसल्लापादिजनितसुखेनातिवाहयेत्यर्थः। अत्रेदानीं ते सर्वं शुभं सिद्धमेव वर्तते अतः यथाकथञ्चित्त्वागमनं परं प्रार्थ्यतइति भावः॥

मित्रादस्मादनघचरितान्मेघराजादिदानीं ।
मद्विज्ञप्तं तदिदमखिलं मद्दशां चाधिगम्य ॥

यत्कर्तव्यं यदभिरुचितं यच्च कालानुरूपं ।
यत्स्नेहार्हं तदभिविमृशन् प्राणनाथ! प्रसीद ॥६७॥

इदानीं स्वसन्देशं सर्वं निगमयति मित्रादिति—हे प्राणनाथ! अनघचरितात् रागद्वेषादिरहिततया निर्दुष्टचरित्रात् मित्रात् महोपकारितया ते प्रियसखात् अस्मात् मेघराजात् आख्यातोपयोगइति पञ्चमी। इदानीं मया सत्यं यस्यप्रियसखइवेत्यारभ्य सायंप्रातरितिपर्यन्तं यद्यद्विज्ञप्तं तदिदमखिलं मद्दशां च अधिगम्य ज्ञात्वा ततः यत्कर्तव्यं भवति यदभिरुचितं त्वदिच्छानुरूपं भवति यच्च कालानुरूपं यत्स्नेहार्हं मयि ते विद्यमानस्य प्रेम्णः युक्तं तत्तादृशं करणीयं अभिविमृशन् साधुसमालोचयन्सन् प्रसीद मत्प्रार्थनां सफलयेति भावः॥

एतत्सर्वं मम निगदितं जीवितेशाय तस्मै ।
वक्तुं भ्रातः! प्रचल दयया रामगिर्याश्रमाय॥
क्षिप्रं गन्तुं निशमय रुजुः कथ्यते कोपि मार्गः ।
प्रारम्भस्ते फलतु यशसे कल्पतां कार्यसिद्धिः ॥६८॥

सर्वं वक्तव्यमुक्त्वा मेघं प्रस्थापयिष्यन्तीं तस्यमङ्गलमाशास्ते एतदिति—हे भ्रातः! मदग्रजेत्युपचारोक्तिस्तु भगिनीदुःखनिवारणं तव स्वतस्सिद्धमेवेति द्योतनाय। मम मत्सम्बन्धि सर्वमेतन्निगदितं मत्प्रतिप्रेषितं सन्देशजातमेतत् तस्मै जीवितेशाय मत्प्राणनाथाय वक्तुं दयया रामगिर्याश्रमाय प्रचल प्रतिष्ठस्व। क्षिप्रं गन्तुं प्रयातुं रुजुः अकुटिलरेखानुकारी कोपि प्रयातृप्रमोदावहः मार्गः कथ्यते मयेति शेषः। आगमनकाले त्वयातावत् तत्तद्विशेषदर्शनार्थं पश्चाद्गमनेन पुनरुत्तरगमनेन ततोवक्रमार्गगमनेन च विलम्ब्यायातं। इदानीं मया कथ्यमनो मार्गस्तु रुजुः सकलदर्शनीय सम्पत्सम्पन्नः क्षिप्रं मज्जीवितेशं आलोकितुमनुकूलश्च तादृशो मार्गः कथ्यतइत्यर्थः। ते तव प्रा-

रम्भः प्रतिसन्देशप्रापणोद्योगः फलतु सिद्ध्यतु। कार्यसिद्धिः तव यशसे कल्पतां यशस्करी भूयादित्यर्थः। एवं प्रतिसन्देशकरणेन यशएव ते मुख्यं फलमिति भावः॥

इति श्रीमन्महीशूरमहाराजकृष्णराजास्थान कविरत्नेन
मण्डिकल् रामशास्त्रिणा विरचिते
मेघप्रतिसन्देशे सव्याख्याने
प्रथमस्सर्गः
समाप्तः।





# अथ द्वितीयस्सर्गः ।

द्रष्टव्यं ते धनपतिपुरप्रान्तरोद्यानमादौ ।
पीत्वा तत्र त्रिनयनशिरश्शेखरीभूतमम्भः ॥
ऊर्ध्वाकारस्तदनु शनकै रुत्पत व्योमसीमाम् ।
द्रष्टारस्तन्नयनहुतभुग्धूमशङ्कां धरन्तु ॥ १ ॥

प्रथमसर्गान्ते रुजुःकथ्यते कोपि मार्ग इत्युक्तम् तदनुसारेण मार्गान् कथयिष्यन्ती यक्षवधूः प्रथमतः प्रस्थितस्य बन्धोरिव मेघराजस्य तत्रत्यदर्शनीयविशेषान् दर्शयितुमाह द्रष्टव्येति—हे मेघराज! धनपतिपुरस्य अलकायाः प्रान्तरे समीपे यदुद्यानं चैत्ररथः तदादौ प्रथमं ते द्रष्टव्यं । कृत्यानां कर्तरिवेति विकल्पात् षष्ठी ॥ तत्र हि विचित्राणां तरुशकुनिमृगलताकुञ्जविहारवेदिकाविलासवापिकानर्थानल्पशिल्पादिविलोकनीयानां विद्यमानत्वादिति भावः । नकेवलं ते दर्शनमात्रप्रयोजनमित्याह पीत्वेति—तत्र चैत्ररथे त्रिनयनशिरश्शेखरीभूतमम्भः शिवशिरोधृतां गङ्गामित्यर्थः । पीत्वा सदा तत्र सदाशिवस्य सन्निहितत्वादिति भावः । तदन्वनन्तरं ऊर्ध्वाकारस्सन् व्योमसीमामाकाशवीथीं प्रति उत्पत । द्रष्टारोद्रष्टृलोकाः तस्य परमेश्वरस्य नयनहुतभुक् अथवा स प्रसिद्धश्चासौ नयनहुतभुक्चेति वा समासः । अर्थात्परशिवफालनेत्राग्निः तस्य योधूमः तस्य शङ्कां तत्प्रकारकभ्रान्तिं धरन्तु बिभ्रतु । तथाच त्वयि शिवशिरोभागात् ऊर्ध्वदेशमुत्पततिसति द्रष्टृणां परमेश्वरफालनेत्राग्निसमुत्थितेयं धूमरेखेति भ्रान्तिर्जायतइति भावः । भ्रान्तिमानलङ्कारः ॥

कैलासाद्रेः कटकमभितस्सञ्चरन् वारिद! त्वं ।
दृश्यं दृष्ट्वा सकलमलकासन्निवेशं प्रयाहि ॥
आमूलाग्रं त्वयि परिगते सर्वतः पर्वतेन्द्रं ।
सोयं शैलः क्षणमनुभवत्वञ्जनाद्रेरभिख्याम् ॥ २ ॥

कैलासाद्रिमलकाञ्च दर्शयितुमाह कैलासेति—हे वारिद! त्वं कैलासाद्रेः कटकमभितः प्रस्थप्रदेशोभयभागयोरित्यर्थः। अभितः परितस्समयानिकषाहाप्रतियोगेपीति द्वितीया। सञ्चरन्सन् दृश्यं दर्शनयोग्यं सकलं अलकासन्निवेशं दृष्ट्वा प्रयाहि प्रतिष्ठस्व। त्वयि पर्वतेन्द्रं कैलासं आमूलाग्रं मूलभागमारभ्याग्रभागपर्यन्तं परिगते परिवारयतिसति सोयं शैलः रजतगिरिः अञ्जनाद्रेरञ्जनराशेः अभिख्यां शोभां क्षणमनुभवतु त्वदीयावृतेर्वायुवशेन क्षणिकत्वादिति भावः। तथाच रजताचलोपि त्वदावरणात् क्षणमञ्जनाद्रिरिव दृश्यतामिति भावः। अत्र अञ्जनाद्रिशोभायाः कैलासाद्रावारोपात् पदार्थनिदर्शना ॥

अस्यां पुर्याममरतरुषु प्रार्थितार्थप्रदेषु।
प्रीताः पौराः गृहभुवि निधीन् गौरवायेत्यवन्ति ॥
भोगासक्तास्सततमधिकं ते तथाप्यत्र कामं।
दुःखातीताः त्रिनयनपरब्रह्मसामीप्यलाभात् ॥ ३ ॥

अथ षड्भिःश्लोकैः पौरवृत्तनिवेदनद्वारा पुरवर्णनं प्रस्तौति अस्यामिति—अस्यां पुर्यामलकायां अमरतरुषु कल्पवृक्षेषु प्रार्थितार्थप्रदेषु सत्सु प्रीताः कृषिवाणिज्यपरोपसर्पणपचनक्रियाद्यायासाभावेन सन्तुष्टाः पौराः पुरजनाः गृहभुवि स्वस्वगृहाभ्यन्तरे निधीन् शङ्खपद्मादीन् गौरवायेत्यवन्ति वयं धनाधीशाः साधुकाराः इतिगौरवार्थं रक्षन्ति नतु जीवनोपयोगार्थमित्यर्थः। किञ्च सततमधिकं भोगासक्ताः। तथापि ते काममत्यन्तं दुःखातीताः आध्यात्मिकाधिभौतिकाधिदैविकाख्यत्रिविधदुःखात्यन्तनिवृत्ताः मुक्तिं गताइति यावत्। कथमेतद्वैराग्यं विहाय सततभोगशालिनां मुक्तिप्राप्तिरित्यतआह त्रिनयनेति—त्रिनयनः परमेश्वरः तद्रूपं यत्परब्रह्म परमात्मा तस्य सामीप्यलाभात् तेन सहैकत्र वासात् सलोकतां समीपतां च गताइत्यर्थः। अत्र सस्ट-

द्धिसद्वस्तुवर्णनादुदात्तालङ्कारः । सचेतरपुरन्यतिरेकव्यञ्जनद्वारा अस्यपुरस्य सर्वोत्तमत्वं व्यञ्जयतीति ज्ञेयम् ॥

आहूतायां पुरयुवतिभिर्मन्दिरेषूत्सवार्थे।
प्रीत्याऽऽगत्य प्रियसुतनुभिस्सम्मिलन्त्यां भवान्याम् ॥
अभ्यर्च्यन्त्यस्सदसि गिरिजां गन्धपुष्पाङ्गरागैः।
तत्सल्लापैर्दधति सखितामत्र धन्या गृहिण्यः॥ ४॥

आहूतेति—अत्रालकायां मन्दिरेषु स्वस्वगृहेषु उत्सवार्थं बालिकाबालकवर्षवर्धन्त्यादिमहोत्सवान् द्रष्टुं भवान्यामम्बिकायां आहूतायां किञ्च प्रीत्या आगत्य प्रियसुतनुभिः स्वपुरसुवासिनीभिस्सह सदसि सम्मिलन्त्यां सत्यां गिरिजां तां महादेवीं गन्धपुष्पाङ्गरागैरभ्यर्च्यन्त्यः गृहिण्यः पुरगेहिन्यः तत्सल्लापैः महादेव्यासह मिथस्सम्भाषणैः सखितां सखीभावं दधति अतएव धन्याः चिरतरोपार्जित महासुकृतशालिभ्योपि कृतकृत्या इत्यर्थः ॥

त्वत्संसर्गात्त्रिभुवनपतिः शङ्करोऽभूत्पतिस्ते।
पीत्वाप्यासीत् प्रियसखि! सुखी घोरहालाहलं तम् ॥
स्त्रीणां भाग्यात् पतिषु विजयो जायते नान्यथेति।
श्रुत्वा वाचं हसति हृदये राजराजेश्वरी सा ॥ ५ ॥

त्वत्संसर्गादिति—हे प्रियसखि! महाभाग्यशालिनि महादेवि ते तव पतिश्शङ्करः त्वत्संसर्गात् त्रिभुवनपतिरासीत् इतिसामान्योक्तिः। तत्त्वतस्तु। केवलस्य ब्रह्मणः जगत्पतित्वाद्यसम्भवेन प्रकृतिसम्बन्धमपेक्ष्यैव तद्भवति उक्तञ्च प्राचीनैः—"शिवश्शक्त्या युक्तोयदि भवति शक्तः प्रभवितुम्" इति। किञ्च तं तथाप्रसिद्धं घोरहालाहलं पीत्वापि सुख्यासीत् नव्यापद्यत। अतस्तदेतत् त्वदीयमङ्गलमाङ्गल्यबलमूलकमेव। कुतस्तत्राह स्त्रीणां भाग्यात् पतिषु पाणिग्राहकेषु विजयो जायते अन्यथा स्त्रीभाग्याभावे न जायतइत्यर्थः।

इतिवाचं श्रुत्वा सा सकलवेदशास्त्रप्रसिद्धा राजराजेश्वरी परदेवता हृदये हसति तासु सखीप्रेम्णा अन्तरेव हसतीत्यर्थः । अर्थान्तरन्यसः स्त्रीस्वभावोक्तिश्च ॥

पुत्रावद्याप्यहह सखि! ते साधु नोद्वाहितौ तौ ।
बालाम्बायाः न सदृशवरो नैव पौत्रावलोकः ॥
संसारस्ते नहि परिणतश्चेति कस्याश्चिदुक्तिं ।
श्रुत्वा देवी हसति हृदये राजराजेश्वरी सा ॥ ६ ॥

श्रुत्वेति—हे सखि! भवानि ते पुत्रौ तौ गजमुखषण्मुखौ अद्यापि तयोः विवाहकालातिक्रमणेपि साधु स्वमहत्वानुरूपं नोद्वाहितौ विवाहं नक्तवत्यसि । बालाम्बायाः स्वप्रियपुत्र्याः सदृशवरः न नास्ति ननिश्चितः । नैव पौत्रावलोकः । पुत्रश्च दुहिता च पुत्रौ भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेषः ॥ तयोरपत्यानि पौत्राणि तस्याऽपत्यमित्यण् । दौहित्राः पुत्रपुत्राश्च तेषां मुखावलोकनमेव ते नास्ति । यदि पुत्रोद्वाहः अभविष्यत्तदा पौत्रोत्पत्तिरभविष्यदेव यदि पौत्रोत्पत्तिरभविष्यत्तदा तदवलोकनं ते अभविष्यदेव तदभावात्तदभावः । किञ्च ते संसारः पुत्रपौत्रादिसंपत्तिः न हि परिणतः न प्रवृद्धः मध्यमसंसार एव वर्तसे । इतिकस्याश्चित्पुरसुवासिन्याः उक्तिं निशम्य सा राजराजेश्वरी हृदये हसति । सहवाससौहार्दात् स्त्रीजनस्वभावाच्च मामियं प्राकृतसुवासिनीं सम्भाव्यैवं वदतीति सान्तर्हासं तामनुगृह्णातीत्यर्थः । एवंविधधन्यतमस्त्रीजनपरिपूर्णेयं पुरीति मुख्योऽर्थः ॥

बालाश्चास्यां गुहगजमुखप्रेरिताः कन्दुकोत्काः ।
कैलासाद्रेस्तटभुवि मुदा साधु सङ्क्रीडमानाः ॥
गत्वाशम्भोर्घनतरजटाजूटगङ्गातटस्थं ।
निष्पीड्येन्दुं निरुपमसुधां नित्यमास्वादयन्ति ॥ ७ ॥

अथ बालक्रीडामाह बालाश्चेति—अस्यामलकायां बालाः माणवकाश्च गुहगजमुखप्रेरिताः ताभ्यां क्रीडितुमाहूताः अतएव कन्दुकोत्काः तत्क्रीडातत्परास्सन्तः कैलासाद्रेस्तटभुवि साधु सङ्क्रीडमानाश्च सन्तः क्रीडोऽनुसम्परिभ्यश्चेत्यात्मनेपदाल्लटश्शानच् गत्वा कन्दुकक्रीडापरिसमाप्तौ प्रस्थाय प्रसिद्धेरविवक्षातः कर्मणः अकर्मिकाक्रिया। शम्भोः शम्भुसम्बन्धिनमित्यर्थः। घनतरे अतिसान्द्रे जटाजूटे कपर्दे या गङ्गा तत्तटस्थं इन्दुं बालचन्द्रं निष्पीड्य निरुपमसुधां नित्यमास्वादयन्तीत्यहो पुरबालकाश्चैतादृशाः अत्रेति भावः ॥

उद्गायन्तीरसुरतरुतलेष्वत्र कन्या मनोज्ञाः ।
दृष्ट्वादृष्ट्वा दहरकुहरे जातरागोपि गाढं ॥
धूत्वा देवी रमरतरुणानाऽऽसु रक्तान् विदित्वा ।
निन्दित्वाशां नियमपरधी नैष्ठिकोऽभूत्कुमारः ॥ ८ ॥

अथ कन्यकाकामनीयकमाह। उद्गायन्तीरिति—अत्रालकायां सुरतरुतलेषूद्गायन्तीः मनोज्ञाः करचरणाद्यवयवसौष्ठववतीः कन्याः अनूढयुवतीः दृष्ट्वादृष्ट्वा पुनःपुनरालोक्य कुमारः षण्मुखः दहरकुहरे हृदयान्तराकाशैकदेशे गाढं दृढं जातरागोपि जातानुरागोपि तद्दर्शनस्य सकलयोगिमनःकर्षकत्वादिति भावः। देवीः देवताः स्त्रियः धूत्वा स जुगुप्सं निरस्य अमरतरुणान् आसु यक्षकन्यकासु रक्तानत्यन्तासक्तान् देवयोषिदपेक्षया आसामतिसुन्दरत्वादिति भावः। विदित्वा अन्यानुरागपात्रतां ज्ञात्वेत्यर्थः। आशां स्वकीयां स्त्र्यपेक्षां निन्दित्वा विवेकित्वादिति भावः। नियमः ब्रह्मचर्यव्रतं परः प्रधानं यस्यास्तादृशी धीर्यस्य स तादृशः ब्रह्मचर्यव्रतैकतत्परस्सन् नैष्ठिकोभूत् स्थिरनैष्ठिकब्रह्मचार्यभूदित्यर्थः। अत्र नैष्ठिकीभवनं प्रति विवेकपूर्वकस्त्र्याशापरित्यागस्य स्त्र्याशां प्रति पुनःपुनः कन्यादर्शनस्य दर्शनं प्रति कन्यामनोज्ञत्वस्य च कारणत्वकल्पनात् कारणमालालङ्कारोगम्यः। एतेनात्रत्यकन्यका अपि त्रिभुवनातीत लावण्यशालिन्य इति मुख्योऽभिप्रायः ॥

दुःखीभूय प्रलपति विभौ देवता या दयार्द्रा ।
तन्माहात्म्याज्जलधर यथा मामनैषीः प्रियोक्तीः ॥
मत्सन्देशं पुनरपि तथा तद्बलात्त्वं ब्रुवीथाः ।
पुंसम्बन्धान्मधुरवचनं वल्लकी किं न वक्ति ॥९॥

मुखाद्यवयवरहितेन मया कथं त्वत्सन्देशः वक्तुं शक्य इत्यत आह :

दुःखीति—हे जलधर! विभौ मन्नाथे दुःखीभूय दुःखमस्यास्तीति दुःखी. सुखादिभ्यश्चेतीनिः । अदुखी दुःखी सम्पद्यमानोभूत्वा दुःखीभूय सम्पद्य-कर्तरि च्विः । च्वौ चेतीकारः । दुःखरहितोपि दैवाद्दुःखवान् भूत्वेत्यर्थः । प्रल-पति स्वेच्छानुरूपं वदति सति या देवता अस्मदाद्यनुग्राहिका मेघाधिष्ठातृदे-वता दयार्द्रा आसीदिति शेषः । तथाच परदुःखं परिभाव्य तत्परिहारेच्छया फलदानोन्मुख्यासीदित्यर्थः । तन्माहात्म्यात् तादृशदेवताप्रेरणाबलात् यथा मां प्रियोक्तीः मत्प्रियसन्देशान् अनैषीः । नीहृकृष्वहामिति नयतेर्द्विकर्म-कत्वम् । मह्यं तत्सर्वं यथा दिव्यवाचा न्यवेदय इत्यर्थः । तथा पुनरपि तद्ब-लात् तादृशदेवताबलात् त्वं मुखाद्यवयवशून्योऽपि त्वं मत्सन्देशं ब्रुवीथाः मन्नाथायेति शेषः । मुखाद्यवयवरहितस्यापि वचनसामर्थ्यं क्वचिदस्तीति दृष्टा-न्तयति—पुमिति । वल्लकी वीणा कर्त्री पुंसम्बन्धात् वादकपुरुषप्रयत्नात् मधुरवचनं न वक्ति किं वक्त्येवेत्यर्थः । तथाच सकललोकानुग्राहकशक्त्य-धिष्ठानस्य तव कदाचिद्वचनशक्तिर्मद्याशक्तिश्च सम्भवेन्नास्मदादेरिति भावः । दृष्टान्तालङ्कारः ॥

मत्कार्यं ते पुनरपि महायासहेतुस्तथापि ।
त्वामेवाहं स्वयमशरणा प्रार्थये वारिदेन्द्र ॥
अर्धीभूतं भवदुपकृतं पूरयोक्तिं हरन्मे ।
स्वोपक्रान्तं महदपि बलात्साधयन्त्येव सन्तः ॥१०॥

अथ मेघं प्रस्थापयिष्यन्ती आत्मनोऽनन्यशरणत्वं दर्शयति। मत्कार्थमिति—हे वारिदेन्द्र! ते तव मत्कार्यं प्रतिसन्देशप्रापणरूपं पुनरपि महायासहेतुः इदानीमेवागतस्य ते पुनस्सद्यः प्रतिनिवृत्य दूरदेशगमनमत्यायासकारणमभूदित्यर्थः। तथाप्यशरणाऽहं स्वयं त्वामेव प्रार्थये अस्मिन् कर्मणि त्वदन्यस्याभावादिति भावः। अर्धीभूतं प्रियसन्देशानयनमात्रेणेत्यर्थः॥ भवतउपकृतमुपकारं मे मम उक्तिं वाचिकं हरन् सन् पूरय। तथाच मेघसन्देशमेघप्रतिसन्देशाभ्यामेव इयं कथा पूर्यते अन्यथा अर्धीभवत्येवेति भावः॥ अर्थान्तरं न्यस्यति। स्वेति—सन्तः लोके सज्जनाः स्वोपक्रान्तं स्वारब्धं कार्यं महदपि दुस्साधमपि बलात्साधयन्त्येव। अर्थान्तरन्यासोऽलङ्कारः॥

वर्षेवर्षे शरदि हि भवत्युत्तराशे निवृत्तिः।
मत्कार्यार्थे सपदि गमने मास्तु ते दोषशङ्का॥
पुष्पोद्भेदे सरिदुपचये वर्षणे वातवृद्धौ।
क्लृप्तः कालः कतिपयदिनव्यत्ययेऽपीष्यते हि॥११॥

मदीयगमनागमनयोः कालाधीनत्वात् कथमद्यैव प्रतिनिवर्तितुं शक्यं मयेत्यत आह—वर्षेति। वर्षेवर्षे प्रतिवर्षमित्यर्थः। शरदि शरत्कालोपक्रमे सति ते तव उत्तराशानिवृत्तिः भवति हि लोकप्रसिद्धेत्यर्थः शरत्कालादर्वाक् दक्षिणादुत्तरं वाति वायुः ततोदक्षिणं। तदनुसारेण तवापीति भावः। मत्कार्यार्थे सपदि शरत्कालादर्वागेव गमने विषये दोषशङ्का कालस्वभावः विरुध्यतइति भयं ते मास्त्वित्यर्थः। स च कालस्वभावः न नियतइत्याह। पुष्पेति—पुष्पोद्भेदे पुष्पविकसने, सरिदुपचये पूर्णप्रवाहे, वर्षणे वृष्टिपतने, वातवृद्धौ वातातिप्रसरणे च, उपलक्षणया प्रसूत्यादिर्ग्राह्यः। इत्यादिविषये क्लृप्तः कालः कतिपयदिनव्यत्ययेपीष्यते अङ्गीक्रियते। तथाच चैत्रे पुष्पविकसनं आषाढे सरिदुपचयः श्रावणे वर्षणं ज्येष्ठे वातवृद्धिः नवमेमासे प्रसूतिः इत्यादिकालनियमः

सामान्यविषयः। विशेषतस्तु तत्तत्कार्यं तत्तत्काले क्वचिद्भवते क्वचिच्च भवति क्वचित्कालभेदेन भवति तत्कारणमज्ञेयमेव। किञ्च वर्षास्वपि मेघः कदाचित्पश्चिमात्पूर्वं दक्षिणादुत्तरमुत्तराद्दक्षिणं च प्रतिष्ठमानो दृश्यते। अतःकालस्वभावः अनियतः तस्मान्मत्कार्यार्थं सपदिगमने मास्तु ते दोषशङ्केति यदुक्तं तद्युक्तमिति भावः॥

मत्प्रीत्यर्थं जलधर! पुरा मां नवोढां प्रियो मे।
नीत्वानीत्वा नयनसुभगान् भारतीयान् प्रदेशान्॥
यान्यान् भागान् त्वदयनगतान् दर्शयन्मे व्यहार्षीत्।
वक्ष्ये तांस्तान् वनगिरिसरित्पत्तनादीन् प्रयायाः॥१२॥

पूर्वं तावत्कथ्यते कोपि मार्ग इत्युक्तं। अलकापुरनार्याः कथं ते भरतखण्डान्तस्स्थितमार्गज्ञानमित्यतआह। मदिति—हे जलधर! पुरा मे प्रियः मत्प्रीत्यर्थं मां सन्तोषयितुं नवोढां मां नयनसुभगान् भारतीयान् प्रदेशान् नीत्वानीत्वा पुनःपुनः प्रापय्येत्यर्थः। त्वदयनगतान् वक्ष्यमाणत्वन्मार्गस्थान् यान्यान् भागान् मे मह्यं दर्शयन्सन् व्यहार्षीत् विहरति स्म। नववधूसमेतस्य यूनः तत्रतत्र बहिर्विहारस्य क्वचिल्लोकसिद्धत्वादिति भावः। वनगिरिसरित्पत्तनादीन् तत्तद्रूपानित्यर्थः। तांस्तान् भागान् वक्ष्ये क्रमेणाभिधास्यामि। प्रयायाः तांस्तान् प्रतिपद्येथा इत्यर्थः॥

प्रस्थाय त्वं प्रथमदिवसे प्राप्य रम्यं हिमाद्रिं।
प्राप्ताऽऽहारो मधुरमधुरैर्मानसीयैः पयोभिः॥
प्रौढीभूय प्रथिततमयाऽऽलिङ्ग्यमानो हिमान्या।
शीतैर्वातै श्शिशिरिततनुर्यामिनीं यापयेथाः॥१३॥

प्रस्थायेति—हे मेघराज! त्वं प्रस्थाय इतःप्रयाणं कृत्वा प्रथमदिवसे रम्यं हिमाद्रिं प्राप्य मधुरमधुरैः अत्यन्तमधुरैः मानसीयैर्मानससरोवरसम्बन्धिभिः

भिश्च वृद्धाच्छइति छप्रत्ययः । पयोभिरम्बुभिः क्षीरैश्च प्राप्ताहारस्सन् प्रौढीभूय अप्रौढा प्रौढा सम्पद्यमाना भूत्वा प्रौढीभूयेति सम्पद्यकर्तरि च्विः अस्य च्वाविती कारः । प्रबलतां सम्पूर्णयौवनताञ्च प्राप्य प्रथिततमया अत्यन्तप्रसिद्धया हिमान्या हिमसंहत्या नायिकयाच इंद्रवरुणेत्यादिना आनुक् । आलिङ्ग्यमानस्सन् शीतैर्वातै शिशिरिततनुश्चसन् यामिनीं प्रथमरात्रिं यापयेथाः अतिवाहयेरित्यर्थः । अत्र श्लिष्टविशेषणसाम्यबलात् लिङ्गबलाच्च हिमानीमेघयोर्नायिकानायकभावः प्रतीयतइति समासोक्तिः । किञ्चात्र प्रस्थातुः प्रथमदिने रम्यवसतिक्षीरपानाङ्गनालिङ्गनादिलाभे मङ्गलं भवतीति शाकुनिकोक्तिर्दर्शिता । तदुक्तं निमित्तनिदाने—

"प्रथमाऽऽवसथे यस्य सौख्यं स्यादखिलेऽध्वनि ।
शिवं भवति यात्रायामन्यथा त्वशुभं भवेत् ॥" इति ॥

**भ्रातः प्रातर्नयनविषये पद्मिनीप्राणकान्ते ।**
**पश्यन्पश्यन् पथिपथि मया प्रोच्यमानान् प्रदेशान् ॥**
**मध्येमध्ये वनगिरिपुरप्रान्तरेषु प्रवर्षन् ।**
**मन्दंमन्दं गतमपहरन् मत्प्रियार्थं प्रयाहि ॥१४॥**

भ्रातरिति—हे भ्रातर्मदग्रजेत्युपचारोक्तिः । प्रातः पद्मिनीप्राणकान्ते दिवाकरे नयनविषये दृष्टेसति सूर्योदये सतीति यावत् । मया प्रोच्यमानान् प्रदेशान् पथिपथि मार्गेमार्गे पश्यन्पश्यन् पुनःपुनः परामृशन्नित्यर्थः । मध्येमध्ये वनगिरिपुरप्रान्तरेषु प्रवर्षन् सन् मन्दंमन्दं मन्दप्रकारं प्रकारे गुणवचनस्येति द्विर्भावः । गतं गमनं अपहरन् निर्वृष्टत्वाज्जलस्य मन्दगमनं त्यजन्नित्यर्थः । मत्प्रियार्थं मत्प्रियनाथं द्रष्टुमित्यर्थः । क्रियार्थेत्यादिना चतुर्थी । प्रयाहि शीघ्रं प्रतिष्ठस्व । अत्र माधुर्यं प्रसादश्चगुणः । वकारप्रकारयोः पुनःपुनरावृत्त्या वृत्त्यनुप्रासोलङ्कारः । रीतिर्वैदर्भीत्यादिरसपोषकसामग्री ज्ञेया ॥

विद्युद्दीप्त्या विलसितवपुर्दीर्घदीर्घीकृतात्मा ।
पीत्वा गाङ्गं जलधर जलं यद्यवाचीं व्रजेस्त्वं ॥
विष्वङ्मीनस्फुरणरुचिरा व्योम्नि दिष्ट्या प्रवृत्ता ।
कालिन्दीति त्रिदशनिकरैर्मंस्यसे मानवैश्च ॥१५॥

विद्युदिति—हे जलधर! त्वं विद्युतां विद्युत्स्फुरणानां दीप्त्या प्रकाशेन विलसितवपुः दीर्घदीर्घीकृतः आत्मा शरीरं यस्य तादृशश्च स्सन् गाङ्गं जलं पीत्वा अवाचीं व्रजेर्यदि दक्षिणां दिशमुद्दिश्य प्रयायाश्चेत्तदा त्रिदशनिकरैरमरबृन्दैः मानवैश्च मही भृभिः विष्वक् समन्तात् मीनानां स्फुरणेन रुचिरा दिष्ट्या दैवयोगेन व्योम्नि प्रवृत्ता प्रवहन्तीतियावत्। एतादृशी कालिन्दीति कलिन्दगिरिसम्भूता यमुनानदीति मंस्यसे ज्ञास्यसे। दिवि भुवि च विद्यमानजनाः विद्युत्स्फुरणादिविशिष्टं त्वामालोक्य दैवाद्दिवि प्रवहन्ती मीनस्फुरणादिविशिष्टा कालिन्दीति भ्रमिष्यन्तीति भावः। बिम्बप्रतिबिम्बभावापन्नधर्मसिद्ध सादृश्यमूलको भ्रान्तिमानलङ्कारः॥

गत्वा किञ्चिद्गमनमलसं मन्दमालम्बमानः ।
पीत्वा सिन्धोस्सलिलममलं प्राप्तसिन्धूपमायाः ॥
वाताधूतः पुनरपि रयात् व्योम्नि विस्तारिताङ्गो ।
गर्जन् यायाः खगपतिरिव प्राज्ञ! काश्मीरसीमाम् ॥१६॥

अथ सिन्धुनदीं द्रक्ष्यसीत्याह। गत्वेति—हे जलधर! त्वं किञ्चिदलसं गमनं गत्वा निपीतगङ्गाजलभारादिति भावः। मन्दमालम्बमानस्सन् वर्षणार्थमिति भावः। प्राप्तसिन्धूपमायाः जलनिधिसदृश्याः सिन्धोः सिन्धुनद्याः "सिन्धुर्ना सरितिस्त्रियाम्" इत्यमरः। अमलं सलिलं पीत्वा पुनःपरिपूरितोदरस्सन्नित्यर्थः। वाताधूतः पुनरपि वायुना नीयमानः अतएव व्योम्न्याकाशे विस्तारिताङ्गस्सन् रयाद्वायुसङ्घट्टनवेगात् खगपतिरिव गर्जन्सन् काश्मीराणां

तन्नामकदेशस्य सीमामुपान्तप्रदेशं यायाः प्रतिपद्येथाः। खगपतिर्यथा व्योम्नि विस्तारितपक्षस्सन् रयाद्गजति तद्वदिति भावः। स्वभावोक्तिसङ्कीर्णेयमुपमा॥

तस्मिन् देशे तव कुलभवैः त्वत्समानोदकैर्वा।
प्रालेयौघैः परमुपचितैः पालिते सस्यजाते॥
कृष्यासक्तास्तुहिनमुदितास्त्वां न काङ्क्षन्ति कामम्।
कार्याभावे धनपतिमपि प्रेक्षते नैव लोकः॥१७॥

तस्मिन्निति—तस्मिन्देशे काश्मीरदेशे तव कुलभवैः त्वदुज्ज्वलप्रदातृपरम्परागतैः अन्यत्र त्वद्वंशोत्पन्नैर्दायादैः त्वत्समानोदकैः त्वद्वच्छीतलजलवर्षिभिः अन्यत्र समानोदकदूरज्ञातिभिः परमुपचितैः अतिप्रवृद्धैश्च प्रालेयौघैः हिमसङ्घैः अन्यत्र राजन्यसमूहैश्चेति पुल्लिङ्गलब्धार्थः। सस्यजाते सस्यानां ओषधीनां जनानाञ्च जाते समूहे पालितेसति। कृष्यासक्ताः कर्षकाः आदानप्रदानादिव्यापारासक्ताः जनाश्च तुहिनेन हिमेन स्वराजकेन च मुदितास्सन्तुष्टास्सन्तः त्वां मेघं महाराजं च कामं विशेषाकारेण न काङ्क्षन्ति वृष्ट्यभावेऽपि हिमेन स्वराजकेनच तत्कार्यसम्भवादिति भावः। अर्थान्तरं न्यस्यति—कार्याभावे सम्पादनीयप्रयोजनाभावे सति लोकः धनपतिं कुबेरमपि न प्रेक्षते न तत्समीपं गच्छतीत्यर्थः। विशेषणसाम्यावगम्यमानसमासोक्तिप्रतिभोत्थापितोऽर्थान्तरन्यासोलङ्कारः। तथाच कस्यचित्सार्वभौमस्य वंशीयेषु क्वचिद्देशान्तरे प्रवृद्धिं प्राप्य प्रजाः परिपालयत्सु तत्पोषणमात्रपरितुष्टस्तत्रत्यो लोकः यथा सार्वभौममपि प्रायशः नापेक्षते तद्वत्काश्मीरीयाः तत्र वृष्टिवैरल्येपि तुहिनमात्रेणानुकूलसस्यफलभाजस्सन्तः प्रायशः वृष्टिं नापेक्षन्तइति भावः॥

द्रक्ष्येत श्रीनगरपदभाग्राजधानीप्रदेशे।
सन्ध्यारागच्छुरिततटिदुद्द्योतिताङ्गी तनुस्ते॥

कादाचित्कं भवदुपगमं प्राप्य हृष्टैः पुरस्थैः ।
काश्मीराक्तैः कनकरुचिरैः राङ्कवैर्भूषितेव ॥१८॥

द्रक्ष्येतेति—श्रीनगरमिति यत्पदं योगरूढशब्दः । तद्वाक् या राजधानी श्रीनगरं तस्याः प्रवेशे त्वत्प्रवेशे सतीत्यर्थः । सन्ध्यारागेण स्फुरितं तडिता उद्द्योतितञ्च अङ्गं यस्याः तादृशी ते तनुः कर्मभूता कदाचिद्भवं कादाचित्कं सकृत्सम्भूतं तस्मिन् देशे नियतवृष्ट्यसम्भवादिति भावः । भवदुपगमं प्राप्य हृष्टैः चिरागमनस्य गौरवापादकत्वादिति भावः । पुरस्थैः श्रीनगरवासिभिर्जनैः कर्तृभिः काश्मीरेण केसररसेन अक्तैः किञ्च कनकरुचिरैः स्वर्णाञ्चलरम्यैः राङ्कवैर्भूषितेव द्रक्ष्येतेत्युत्प्रेक्षा । एतेनेदं नगरं अग्निशिखानां राङ्कवाणाञ्च उत्पत्तिस्थानमिति व्यज्यते ॥

तामावृण्वन् स्वजलकणिकासेचनैश्शीतयित्वा ।
पौरैरस्मत्पुरजनसमैः प्रेक्ष्यमाणः प्रभाते ॥
दृष्ट्वा लोकैः प्रथितविभवैः पूजितां शारदाम्बाम् ।
पञ्चापाऽऽख्यं जनपदमथ प्रेक्षितुं सम्प्रयाहि ॥१९॥

तामिति—तां श्रीनगरीं आवृण्वन् सन् स्वजलकणिकासेचनैश्शीतयित्वा तामभितः प्रवर्ष्येत्यर्थः । अस्मत्पुरजनसमैः अलकापुरजनवत्सुन्दरैः पौरैः प्रेक्ष्यमाणः सन् प्रभाते प्रथितविभवैर्महाभाग्यशालिभिर्लोकैस्तद्देशीयैः पूजितां शारदाम्बां देवीं तत्र प्रसिद्धां दृष्ट्वा अथ देवीदर्शनानन्तरं पञ्चापाख्यं पञ्चनद्यम्बुपूर्णतया पञ्च आपः यस्येति पञ्चापमितिप्रसिद्धं भाषायां पञ्जाबिति यावत् । तादृशं जनपदं प्रेक्षितुं सम्प्रयाहि शीघ्रं प्रतिष्ठस्वेत्यर्थः ॥

तत्र प्राच्यां लसति महती देहलीराजधानी ।
सर्वैश्वर्यप्रसवभवनं वीरलक्ष्मीविहारः ॥
वासस्थानं भवति नियतं सा हि साम्राज्यलक्ष्म्याः ।
रम्यैर्हर्म्यैर्नयनसुभगां पश्य तामम्बरस्थः ॥२०॥

तत्रेति—तत्र पञ्चापदेशे प्राच्यां त्वन्मार्गात्प्राग्दिशि महती देहली-राजधानी लसति सकलजननेत्रानन्दनतया समिन्धे। सा हि सर्वैश्वर्याणां प्रसवभवनमुत्पत्तिस्थानं। वीरलक्ष्म्याः विहारः विहारस्थानं। तत्र सकलसैनिकानां महावीराणां च विद्यमानत्वादिति भावः। साम्राज्यलक्ष्म्याः एकच्छत्राधिपत्यस्य नियतं वासस्थानं भवति। युधिष्ठिरादीनां तदन्येषां च पर्यायेणाधिष्ठानत्वादिति भावः। रम्यैर्हर्म्यैः नयनसुभगां तां देहलीं अम्बरस्थस्येव पश्य त्वन्मार्गस्य पार्श्वस्थत्वादिति भावः। समृद्धिमद्वस्तुवर्णनात् उदात्तोलङ्कारः॥

अम्भश्चुम्बन्नमृतसरसस्तां शतद्रुं श्रयेथाः।
पुत्रव्यापद्व्यथितहृदयं प्राणहानाय कण्ठे॥
बद्ध्वा गुर्वीमुपलफलकां मङ्क्षुकामं वसिष्ठं।
दृष्ट्वा भीत्या सपदि शतधा या द्रुताऽभूच्छतद्रुः॥२१॥

अम्भइति—अमृतसरसः अमृतसरोनामकमहानगरस्थितं यदमृतसरोवरं तस्येत्यर्थः। अम्भः स्वादूदकं चुम्बन् पिबन् सन् तां शतद्रुं तन्नाम्नीं नदीं श्रयेथाः प्राप्नुयाः। या महानदी पुत्राणां शतसङ्ख्याकानां व्यापदा विश्वामित्रशापमूलकेन विनाशेन व्यथितं सञ्जातव्यथं हृदयं यस्य अतएव प्राणहानाय प्राणपरित्यागाय कण्ठे स्वग्रीवायां गुर्वीमुपलफलकां बध्वा मङ्क्षुकामं मिमङ्क्षुं वसिष्ठं महर्षिं दृष्ट्वा भीत्या शतधा शतप्रकारेण द्रुता विच्छिन्ना सती शतद्रुनामधेया अभूत् तामिति पूर्वेणान्वयः। पुराकिल वसिष्ठविरोधेन विश्वामित्रस्तत्पुत्रशतं शापेन नाशितवान्। पुत्रशोकमसहमानोवसिष्ठः कण्ठे गुर्वीं शिलां बद्ध्वा कस्याञ्चिन्महानद्यां स्वप्राणत्यागार्थं ममज्ज। सा नदी स्वस्मिन् वसिष्ठनाशे स्वमूलकं ब्रह्मादिदेवताकोपमाशङ्क्य शतधा विशीर्णाऽऽसीत्। तदादि सा शतद्रुनामाऽभूदिति पौराणिकी कथा अत्रानुसन्धेया॥

तीर्त्वा तामुद्भवमुपगतां मानसोपान्तभूमेः ।
तं सिद्धानां विहरणपदं सिहलं संश्रयेथाः ॥
तत्र स्थित्वा विदितविभवान् वीरलक्ष्मीसमेतान् ।
लक्षीकुर्वन् व्रज घन! ततो राजपुत्राधिवासान् ॥२२॥

तीर्त्वेति—हे घन! मेघराज त्वं, ततश्शतद्रुसेवनानन्तरं मानससरस्सन्निकर्षादुत्पन्नां तां शतद्रुनदीं तीर्त्वा सिद्धानां योगसिद्धानां विहारस्थानभूतं सिहलाख्यमुन्नतप्रदेशं भजेथाः। तत्र स्थित्वा विदितमहावैभवयुक्तान् वीरलक्ष्मीसमेतांश्च राजपुत्राधिवासान् लक्षीकुर्वन् व्रज राजपुत्राधिष्ठानानां तदनन्तरत्वादिति भावः ॥

तेषु ज्योतिःपुरमिति समुद्योतते राजधानी ।
जित्वा शत्रून् जयपुरमभूत्कापि तद्राजधानी ॥
वृद्धेर्योगादुदयपुरतां प्राप या राजधानी ।
तस्यामास्ते रविकुलभुवां सन्ततिर्भूमिपानाम् ॥२३॥

तेष्विति—तेषु राजपुत्रावासेषु ज्योतिःपुरमिति प्रसिद्धा कापि महाभाग्ययुक्ता राजधानी महाराजावासस्थानं राजानः धीयन्ते अस्यामिति राजधानी अधिकरणे ल्युट् यस्येतिचेत्यकारलोपः। टिड्ढाणञित्यादिना ङीप्। समुद्योतते सर्वोत्कर्षेण प्रकाशते। कापि सर्वोत्कृष्टा तदन्या राजधानी शत्रून् जित्वा जयपुरमभूत् सकलशत्रुजयित्वादन्वर्थनामधेयाभूदित्यर्थः। औपचारिकोयं कर्तृत्वारोपः। तदन्या या राजधानी वृद्धेर्योगात् सकलसम्पत्समृद्धिसंबन्धात् प्रतिदिनसूर्योदयकालकलितराजनियमजनिताभिवृद्धियोगाच्च उदयपुरतां उदयपुरमित्यन्वर्थनामधेयत्वमाप। तस्यामुदयपुराख्यराजधान्यां रविकुलभुवां सूर्यवंशोत्पन्नानां भूपानां राज्ञां सन्ततिरास्ते अद्यापि विद्यतइत्यर्थः। निरुक्त्यलङ्कारः। "निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनं" इतिलक्षणात् ॥

९

सामन्तोर्वीपतिशतनुते सौम्य! सीमन्तिनीनां ।
सीमन्ताभिर्नरपतिपथैश्शोभमाने पुरेऽस्मिन् ॥
ताराकारास्तरुणशफरीलोचनास्सावकुण्ठाः ।
सौधेसौधे न परपुरुषैर्नेत्रपात्रीक्रियन्ते ॥२४॥

सामन्तेति—हे सौम्य! सुमुख मेघराज सामन्तोर्वीपतिशतेन बहुभिस्सन्निहिततत्तद्देशाधीश्वरैः नुते अहो अत्रत्यराजवीथीरामणीयकं न कस्यापि राज्ञः पुरे दृश्यतइति भूयोभूयस्संश्लाघितइत्यर्थः । किञ्च सीमन्तिनीनां सौभाग्यशालिस्सरसवधूनां सीमन्ताभिः रज्जुविभक्तकेशपाशमध्यरेखानुकारिभिः नरपतिपथैः राजमार्गैश्शोभमाने अस्मिन् पुरे उदयपुरे ताराकाराः नक्षत्रपङ्क्तिवन्नयनाभिरामाः तरुणशफरीलोचनाः शफरोद्वर्तनवत्यलयच्छायिताक्ष्यः सावकुण्ठाः अवकुण्ठनाच्छादितलावण्याः अतएव सौधेसौधे प्रतिसौधं परपुरुषैर्नेत्रपात्रीक्रियन्ते स्वभर्तृस्वभ्रातृस्वपितृभिन्नेन न केनापि दृश्यन्तइत्यर्थः ॥

चित्तोडाख्यं जयति नगरं तैर्नृपैः पाल्यमानं ।
घोरे युद्धे विनिहतधवाः विश्रुताः वीरपत्न्यः ॥
क्षुद्रारिभ्यो निजकुलभयं शङ्कमानाश्च यस्मिन् ।
पातिव्रत्यप्रवणमतयो बृन्दशोऽग्निं प्रविष्टाः ॥२५॥

अथ विचित्रं पावनञ्च वृत्तान्तमाह चित्तोडेति—तैर्नृपैः राजपुत्रवंशीयैः पाल्यमानं चित्तोडाख्यं नगरं जनभरितमुन्नतस्थानं जयति सर्वोत्कर्षेण वर्तते । पुरा घोरे युद्धे क्रूरैरविद्धकर्णैस्सह महायुद्धे संप्राप्ते सति विनिहतधवाः तैः क्रूरशत्रुभिस्संहतभर्तृकाः विश्रुताः पतिव्रताशिरोमणित्वेन प्रसिद्धाः वीरपत्न्यः विनिहतराजपुत्रमहावीरकुटुम्बिन्यः कर्त्र्यः क्षुद्रारिभ्यः दुराशयानियुध्य परनिहन्तारः क्षुद्राः तादृशरिभ्यः भीत्रार्थानामितिपञ्चमी । निजकुलभयं परिशुद्धोयं राजपुत्रवंशः शत्रुक्रौर्यात्प्रदुष्ये दिति भयं शङ्कमानाः अतएव

पातिव्रत्ये प्रवणा आसक्तमतिर्यासां तादृश्यस्सत्यः बृन्दशः अग्निं प्रविष्टाः। एकदा परस्सहस्राःक्षितीः प्रज्वाल्य शरभङ्गवत्स्वस्वतनुमाहुतीचक्रुरित्यर्थः। "आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या नारी साध्वी ज्ञेया पतिव्रता" इति धर्मशास्त्रमनुसृत्येति भावः। अत्र निजकुलभयशङ्का-याः अग्निप्रवेशं प्रति हेतुत्वकल्पनात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तेनच कुलाभिमानशालिन्यः पतिव्रताशिरोमणयः पतिभक्तिमहाधीरत्वशास्त्रप्रत्यया-दिशालिन्यस्ता इत्यर्थो व्यज्यन्त इत्यलङ्कारेण वस्तुध्वनिः॥

तस्मिन् देशे स्वशरनिकरान् तत्रतत्र प्रवर्षन्।
विद्युत्खड्गान् वियति चलयन् सिंहवद्भूरि गर्जन्॥
वीर्योत्साहान् भुजबलवतां वर्धयन् स्वैश्चरित्रैः।
तत्रत्यानां जलद! मनसः कौतुकं कल्पयेथाः॥२६॥

तस्मिन्निति—हे जलद! तस्मिन् देशे राजपुत्रदेशे स्वस्य शराणामु-दकानां बाणानां च निकरान् प्रवर्षन्सन् योधइवेति भावः। वियति विद्युत-एव खड्गास्तान् चलयन् कम्पनेचलिरिति मित्संज्ञया मितां ह्रस्वइति ह्रस्वः। सिंहेन तुल्यं सिंहवत् तेनतुल्यं क्रियाचेद्वतिरिति वतिः। भूरि यथातथा गर्जन् सिंहनादं कुर्वंश्च भुजबलवतां वीर्योत्साहांश्च स्वैश्चरित्रैः वर्धयन्सन् तत्रत्या-नां राजपुत्राधिवासजनितानां वीराणां मनसः कौतुकं सन्तोषविशेषं कल्प-येथाः प्रकल्पयेरित्यर्थः। रूपकोपमयोस्संसृष्टिः। अत्र दर्पजनितोत्साहरूपः लौकिकस्थायी भयायितमेवालम्बितः भुजबलवद्वीरपुरुषदर्शनोद्दीपितः शर-वर्षणविद्युत्खड्गचलनसिंहगर्जनाद्यनुभावितः अन्तर्दर्पाहङ्कारकौतुकादिभिर्व्यभि-चरितः रूपकोपमाद्यर्थालङ्कारैः पुनःपुनरावृत्ततकारवकारककाराद्यनुप्रासरूपश-ब्दालङ्कारैश्च परिपोष्यमाणः श्लेषप्रसादमाधुर्यादिगुणैः सहाभिव्यञ्जितः मध्य-मारभट्या खकारभकारधकारयकारैस्तत्तद्वर्णैश्च किञ्चित्किञ्चिदभिव्यज्यमानस्सन्-

लौकिकरूपेण समग्रविग्रहतामेत्य वीररसनाम्ना सुधीभिश्चर्व्यते अथवा अविदितवेद्यान्तरं रसिकैरास्वाद्यतइतिच ज्ञेयम् ॥

वक्रीभूतानपि तव पथस्तानरालाद्रिभागान् ।
तत्पार्श्वस्थानपि जनपदान् प्रीणयन्नम्बुवर्षैः ॥
सस्यैर्हीनं सिकतिलमरुं भूरितापं गतापं ।
मा विस्मार्षीर्मुषितविभवाः पालनीया हि पूर्वम् ॥२७॥

वक्रीभूतानिति—हे जलद! तव पथस्त्वन्मार्गस्य वक्रीभूतानपि तिर्यग्वक्राकारेण स्थितानपि तान्मद्नुभूतान् अरालाद्रिभागान् तन्नामकान् वक्राकारांश्च अद्रिभागान् अरालंवृजिनंजिह्ममित्यमरः । तत्पार्श्वस्थान् जनपदान् देशानपि अम्बुवर्षैः प्रीणयन्सन् सस्यैः हीनं ऊसरत्वादनङ्कुरितसस्य जातं भूरितापं वृक्षरहिततया निरङ्कुशप्रवृत्तसूर्यातपत्वादिति भावः । गता आपो यस्मादिति बहुव्रीह्यन्तः ऋक्पूरित्यादिना अप्रत्ययः । जलकथाशून्यमित्यर्थः । सिकतिलमरुं सिकताः अस्मिन् सन्तीति सिकतिलः सिकताशर्कराभ्याञ्चेति मत्वर्थीयः इलच्प्रत्ययः । सचासौमरुश्चेति विस्तृतकेवलसिकतामयः प्रदेशः भूतपूर्वसमुद्रत्वादिति भावः । एतादृशं एतं माविस्मार्षीः तत्र सत्वाभावबुध्या मोपेक्षिष्टा इत्यर्थः । माङिलुङीत्यडागमप्रतिषेधः । मुषितविभवा अपहृतैश्वर्या जनाः पूर्वमितरापेक्षया प्रथमतः पालनीया हि प्रदातृभिरितिशेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

देशादस्माद्वियति विचलन् देवदेवं लसन्तं ।
त्रैलिङ्गानामिह परसुखप्रापणायोज्जयिन्यां ॥
विद्युद्दीपैस्तनितपटहैर्मेघपुष्पाभिवर्षैः ।
काले सान्ध्ये जलधर! महाकालनाथं भजेथाः ॥२८॥

देशादिति—हे जलधर! अस्माद्देशाद्राजपुत्राधिवासात् वियत्याकाशे विचलन्सन् त्रयाणां लिङ्गानां समाहारस्त्रिलिङ्गं तद्धितार्थेत्यादिना समासः ।

द्विगुरेकवचनं त्रिलिङ्गे। भक्तास्त्रैलिङ्गाः तेषां इहपरसुखप्रापणाय उज्जयिन्यां लसन्तं देवानां हरिब्रह्मेन्द्रादीनां देवं नियामकं महाकालनाथं महाकालनाम उज्जयिन्यामेकं स्थानं तस्यनाथं अतएव महाकालनाथसंज्ञकं महेश्वरमित्यर्थः। विद्युद्दीपैस्तनितपटहैः मेघपुष्पाणि जलानि तान्येव पुष्पाण्यर्चनीयानि तेषां वर्षैश्च सान्ध्ये काले भजेथास्सेवेथाः। श्रेयस्करत्वादिति भावः। उक्तञ्च स्कान्दे—

"आकाशे तारकालिङ्गं पाताले हाटकेश्वरं।
मर्त्यलोके महाकालं दृष्ट्वा मोक्षमवाप्नुयात्॥" इति॥

अत्र विद्युद्दीपेत्यादिरूपकत्रयस्य समप्राधान्यसङ्करः॥

कल्ये काले वियति विलसन् विस्तृतात्मा समन्तात्।
वाताघातैर्वलितवलितः कूर्मपृष्ठायिताङ्गः॥
दूरे शैलद्विपरथपुरीपक्षिवृक्षायमाणैः।
नानाकारैः निखिलनयनानन्दमापादयेथाः॥२९॥

अथ प्रातःकृत्यमाह कल्येति—कल्येकाले प्रातःकाले वियत्यन्तरिक्षे विलसन् आकाशगतइतियावत्। समन्ताद्विस्तृतः आत्मा स्वशरीरं यस्य तादृशस्सन् वातानां आघातैरितस्ततः प्रणोदनैः वलितवलितः विच्छिद्य विच्छिद्य पिण्डीकृतैकैकभागः अतएव कूर्मपृष्ठवद्दृश्यमानाङ्गस्सन् दूरे आकाशदूरभागे शैलवत् द्विपवत् रथवत् पुरीवत् पक्षिवत् वृक्षवच्च दृश्यमानैः नानाकारैः निखिलानां जनानां नयनानन्दं आपादयेथाः कुर्वीथाः। स्वभावोक्तिसमुत्थापितेयमुपमामाला॥

तामुज्झित्य प्रकृतिसुभगां श्रीविशालां विशालां
व्योमारुह्य त्वयि विचलिते विन्ध्यसानौ विहर्तुं॥
सालभ्यास्त्वत्कृतमुपकृतं त्वां च संश्लाघयेरन्।
त्वन्मूलं हि प्रवितमिदं सर्वसौभाग्यमुर्व्याम्॥३०॥

तामिति—प्रकृत्यासुभगां रम्यां प्रकृत्यादिभ्यउपसङ्ख्यानमिति समासः श्रिया सम्पत्समृद्ध्या शोभया च विशालामधिकां तां विशालां पुरीं उज्झित्य विन्ध्यसानौ विहर्तुं त्वयि विचलिते प्रस्थितेसति मालव्यास्तद्देशोत्पन्नाः प्रजाः त्वत्कृतं उपकृतमुपकारं वृष्टिप्रदानादि त्वां च संश्लाघयेरन् महानुभावोयं मेघराजोऽस्मानवर्धयदिति स्तुवीरन्नित्यर्थः। कथमेतदित्यतआहत्वदिति—प्रविततं सर्वलोकविस्तृतं इदंसर्वसौभाग्यं सकलैश्वर्यसमृद्धिः हि यस्मात्कारणात् त्वन्मूलं त्वत्कारणकं त्वत्सत्वे तत्सत्वं त्वदभावे तदभावइत्यन्वयव्यतिरेकाभ्यां त्वन्मात्रावलम्बनकं अतस्त्वमेव स्तुत्यइति मुख्योऽभिप्रायः॥

यत्पादस्था प्रवहति सरिच्छर्मदा नर्मदाख्या।
यन्मध्यस्था महिषमथिनी चण्डिका पाति लोकान्॥
यच्छीर्षस्थः श्रुतिशतनुतस्स्वर्गलोकस्सुखात्मा।
सोऽयं विन्ध्यस्सकलजगदानन्दहेतुर्विभाति॥३१॥

अथ चतुर्भिश्श्लोकैः विन्ध्यगिरिं वर्णयति यदिति—शर्मदा सुखप्रदा नर्मदाख्या सरित् यस्य विन्ध्याद्रेः प्रान्तपर्वतस्था तदुत्पन्ना सतीत्यर्थः। प्रवहति सर्वलोकोपकारार्थं प्रसरतीत्यर्थः। यन्मध्यस्था महिषमथिनी चण्डिका लोकान् पाति। श्रुतिशतनुतः सुखात्मा सुखरूपः स्वर्गलोकः यच्छीर्षस्थः स्वर्गपर्यन्तोन्नतइति यावत्। सोयं विन्ध्यः सकलजगदानन्दहेतुस्सन् विभाति॥

यस्य प्रस्थे कृतवसतयः कर्मिणः केपि लोकाः।
कूटाग्रस्थं कुलगिरिनिभं स्वर्गमार्गं स्पृशन्तम्॥
पश्यन्तस्त्वां पुनरपि गिरिर्वर्धते तत्पथेन।
स्वर्गं यामेत्युदितमतयो यातुमूर्ध्वं यतेरन्॥३२॥

यस्य विन्ध्याद्रेः प्रस्थे सानुभागे कृतवसतयः पुरवासेन स्वाचारलोपभयादरण्ये वर्तमानाः "पत्तने पादआचार" इति वचनादिति भावः। कर्मिणः

श्रौतस्मार्तकर्मपरायणाः केऽपि लोकाः त्रैवर्णिकाः कर्तारः कूटाग्रस्थं शिखरगतं कुलगिरिनिभं सप्तकुलाचलान्यतमसदृशं स्वर्गमार्गं स्पृशन्तं पर्वतेनसहैकाकारेण स्वर्गपर्यन्तस्थितं एतादृशं त्वां पश्यन्तः अतएव गिरिः विन्ध्यः पुनरपि पूर्ववद्वर्धते तत्पथेन गिरिमार्गेण मौमेनेतियावत् । ऋक्पूरित्यादिना समासान्तोऽप्रत्ययः । स्वर्गं याम आरोहाम । इत्युदितमतयः बहुकालादारभ्य वयमायस्य कर्म कुर्वाणाअपि न किञ्चित्फलमवाप्नुवाम इदानीं गिरिवर्धनात्समयोलब्धः । अतः पादाभ्यामेव सशरीरं स्वर्गं गच्छामेत्युत्पन्नभ्रान्तयस्सन्तः ऊर्ध्वमुपरिदेशं यातुमारोढुं यतेरन् सम्भावनायाम् लिङ् । अत्र स्वर्गमार्गस्पर्शि मेघदर्शनस्य गिरिवर्धनभ्रान्तिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं । तदुज्जीवितेयं प्रवृत्तिपर्यवसायिनी भ्रान्तिरिति भ्रान्तिमानलङ्कारः । पुराकिल मेरुजिगीषयोपरि प्रवर्धमानं विन्ध्यमालोक्य सूर्याचन्द्रमसोर्गतिनिरोधाच्चकितैर्देवैः दक्षिणां दिशं प्रेषितोऽगस्त्यः मार्गे दण्डवत्प्रणतं शिष्यं विन्ध्यं एवमेवास्स्वेत्युक्त्वा जगाम । तदादि विन्ध्योत्तरदक्षिणयोर्देशयोः द्वादशवर्षकालव्यत्ययोऽभूदिति पौराणिकी कथात्रानुसन्धेया ॥

तत्रारण्ये प्रसवसमयं प्राप्तवत्यां कुरङ्ग्यां ।
मुग्रैर्न्याघ्रैर्दशनकुलिशैः दष्टपृष्ठार्दितायां ॥
दीनाक्रन्दैर्दलितहृदये मद्रुते कृष्णसारे ।
व्याघ्रान् शीघ्रं कठिनकरकावृष्टिभिर्वारयेथाः ॥३३॥

तत्रेति—तत्रारण्ये विन्ध्यारण्ये कुरङ्ग्यां कस्याञ्चिद्गर्भवत्यां मृगाङ्गनायां प्रसवसमयं प्राप्तवत्यां सत्यां उग्रैर्व्याघ्रैः कर्तृभिः दशनकुलिशैः वज्रसदृशैर्दन्तैः करणैः दष्टपृष्ठार्दितायां दंशिताधोदितशिशुवद्योनिभागबाधितायां च सत्यां दीनाक्रन्दैः दंश्यमानकुरङ्गीदीनाक्रन्दैः दलितं विदारितं हृदयं यस्य तादृशे तच्छोकदग्धहृदये इतियावत् । कृष्णसारे तद्रक्षार्थं स्थिते तत्राथे

प्रद्रुते व्याघ्रभयात्तां विहाय पलायिते सति शीघ्रं त्वं व्याघ्रान् कठिनकरकाणां शिलावत्कठिनवर्षोपलानां वृष्टिभिर्वारयेथाः । परव्यथापरिहारस्य धर्म्यत्वादिति भावः । अत्र कुरङ्गद्वयसमवेतं भयं स्थायी व्याघ्रदर्शनोद्दीपितं दीनाक्रन्दनप्रद्रवणप्रसवक्रियाद्यनुभावितं प्रसवव्यथाव्याघ्रदन्तदंशनव्यथादैन्यश्रमान्तस्तापादिभिः व्यभिचारिभिः परिपोषितं तत्क्षणोत्पन्नस्वेदाश्रुवैस्वर्यवैवर्ण्यवेपथुभिस्सात्त्विकैः समुद्योतितं श्लेषप्रसादादिगुणैः दशनकुलिशेत्युपमाद्यलङ्कारैश्च अन्तर्बहिरुत्तंभितं अनुरूपेण चकितचकितव्यथितव्यथितहरिणवृत्तान्तबोधकेन मन्दाक्रान्तेन सकलरससाधारिण्या वैदर्भ्या वृत्या पुनःपुनःश्रूयमाणष्टवर्णघवर्णादिभिश्च किञ्चित्किञ्चिदक्रमेणाभिव्यञ्जितां स्वादुतामापाद्यमानं च सत् परमानन्दरूपेण सहृदयैरास्वाद्यतइति भयानकसमन्वयः ।

इदं द्वात्रिंशपद्यं एतत्प्राक्तनमेकान्तरं त्रिंशं पद्यं च मदीये भैमीपरिणयनाटके विन्ध्यारण्यवर्णनप्रस्तावे लिखितपद्ययोः छायानिबन्धनमिति ज्ञेयम् ॥

तत्र क्रुद्धाः क्षुधितहरयः क्वापि गर्जन्ति घोरं ।
त्रस्ताः क्वापि द्विरदपतयो चीङ्कृतान्युद्गिरन्ति ॥
झाङ्कुर्वन्ति प्रदरपतनैः क्वाप्यहो निर्झरौघाः ।
शब्दायन्ते मधुरनिनदैः क्वापि कान्ताश्शकुन्ताः ॥३४॥

तत्रेति—तत्र विन्ध्यारण्ये क्षुधिताः हरयस्सिंहाः क्रुद्धास्सन्तः क्वापि कस्मिंश्चित्प्रदेशे गर्जन्ति । त्रस्ताः सिंहगर्जनाद्भीताः द्विरदपतयः क्वापि चीङ्कृतान्युद्गिरन्ति आर्तध्वनिं कुर्वन्तीत्यर्थः । क्वापि निर्झरौघाः प्रदरपतनैः प्रदरेषु जम्बूकुञ्जादि लतागुल्मेषु दूरात्सानुभ्यः पतनैः झाङ्कुर्वन्ति अहो परमाद्भुतं दर्शनीयमित्यर्थः । कान्ताः मनोज्ञाः शकुन्ताः पक्षिणः मधुरनिनदैः क्वापि शब्दायन्ते शब्दं कुर्वन्ति शब्दवैरेत्यादिना शब्दशब्दात्करोत्यर्थे

कनामधातोर्लट्? । श्रवणसुभगं कूजन्तीत्यर्थः । अत्र चतुर्भिः पादैः क्रमेण भीतित्रासाद्भुतानन्दभावैः अरण्यस्वभावो वर्णितइति ज्ञेयम् ॥

तत्रारण्यान् तरुमृगलतापक्षिकीटादिवर्गान् ।
सिञ्चन् माता स्वयमिव शिशून् सूक्ष्मधारैः पयोभिः ॥
पुण्यां गत्वा तदनु तपतीं तान् विदर्भान् प्रयायाः ।
भैमीरूपा समजनि पुरा यत्र सौभाग्यलक्ष्मीः ॥३५॥

तत्रेति—तत्र विन्ध्यारण्ये आरण्यान् तत्र भव इत्यण् । तरुमृगलतापक्षिकीटादिवर्गान् सूक्ष्मधारैः पयोभिरुदकैः दुग्धैश्च माता शिशूनिव सिञ्चन्सन्नित्युपमा । तदनु पुण्यां तपतींनाम नदीं गत्वा तान् मदनुभूतान् विदर्भान् विदर्भदेशमित्यर्थः । विदर्भाणां जनपदः विदर्भाः जनपदे लुबितिलुप् । प्रयायाः यत्र विदर्भेषु सौभाग्यलक्ष्मीर्मङ्गलदेवता भैमीरूपा दमयन्तीरूपासती समजनि अवातार्षीत् तान्विदर्भानिति पूर्वेणान्वयः ॥

तस्मिन् देशे सकलगुणसम्पूरिता कापि रीतिः ।
सर्वार्थानामुपरि कथिता मूर्ध्नि चालङ्क्रियाणाम् ॥
चिन्तामात्रादमृतसरसि स्वान्तमामज्जयन्ती ।
वाटीवास्ते वचनरचनाचातुरीविभ्रमाणाम् ॥३६॥

तस्मिन्निति—तस्मिन्देशे विदर्भदेशे कापि रीतिः सर्वोत्तमः आचारक्रमो व्यवहारक्रमश्च वर्तते । सातु कीदृशीति चेत् सकलगुणसम्पूरिता प्रीतिविनयादिसद्गुणसम्पूर्णा । यथाह भवभूतिः,

"प्रियप्राया वृत्तिः विनयमधुरो वाचि नियमः ।
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ॥
पुरोवा पश्चाद्वा तदिदमविपर्यासितरसं ।
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥" इति ॥

सर्वार्थानां उपरि कथिता धनकनकवस्तुवाहनादिभ्योप्युन्नतत्वेन निश्चिता। "गुणएव गिरीयान् स्यान्नार्थसम्पद्गरीयसी" इति न्यायादिति भावः। किञ्च सा सद्रीतिः अलङ्क्रियाणां कटकोर्मिकाकुण्डलादिभूषणानां मूर्ध्नि कथिताच तदधिकत्वेनोक्तेत्यर्थः। "केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्वलाः" इत्यादिन्यायादिति भावः। चिन्तामात्रात् तद्देशीयगुणपरिपाटीस्मरणमात्रादेव स्वान्तं मनः अमृतसरसि आमज्जयन्ती अमृतसरोऽवगाहनवदाह्लादयन्ती सती वचनरचनाचातुरीविभ्रमाणां प्रौढवाक्चातुर्यप्रचाराणां वाटीव निवासस्थानमिवास्ते। एवंविधसद्रीतिशालिनस्तद्देशीया इति भावः। इत्येकोऽर्थः। अन्यत्र तु—तस्मिन्देशे विदर्भदेशे स्थिता काप्यनिर्वाच्या रसमयी रीतिः वैदर्भीरीतिरित्यर्थः। साऽपि कीदृशीति चेत् सकलगुणसम्पूरिता माधुर्यौजःप्रसादाद्यैस्सर्वैर्गुणैस्सम्पूर्णा सर्वगुणक्रियमाणाह्लादकारिणीत्यर्थः। सूत्रितं च वामनेन "समग्रगुणा वैदर्भी" इति॥ सर्वार्थानां सर्वेषां वाच्यार्थानां लक्ष्यार्थानां व्यङ्ग्यार्थानां च उपरिकथिता तदधिकाह्लादकारिणीति निर्णीतेत्यर्थः। अलङ्क्रियाणां शब्दालङ्काराणां अर्थालङ्काराणाञ्च मूर्ध्नि कथिता च तदपेक्षयाधिकचमत्कारकारिणीत्यर्थः। चिन्तामात्रात् वैदर्भरीतिस्वरूपस्मरणमात्रादपि स्वान्तममृतसरस्यामामज्जयन्ती अमृतसारपानवदाह्लादयन्तीसतीत्यर्थः। वचनरचनानां कवितासरसप्रौढगम्भीरमधुरबन्धानां या चातुरी कौशलं तद्विभ्रमाणां विच्छित्तिविशेषरूपविलासानां वाटीवास्ते निवासस्थानमिवास्ते. शोभतइत्यर्थः। तदेतदुक्तमालङ्कारिकसूत्रकारेण॥

"अस्पृष्टा दोषमात्राभिस्समग्रगुणगुम्भिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥
सति वक्तरि सत्यर्थे सति शब्दानुशासने।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥" इति॥

अत्र उपमाप्रतिमोत्थापितः प्रकृताप्रकृतश्लेषः अत्रत्यवैदर्भरीत्या समुज्जास्यमानो विलक्षणविच्छित्तिविशेषाधायको भवतीति ज्ञेयम् ॥

अर्णःपूर्णा सरितमभितोऽभ्यर्णदेशेषु कीर्णां ।
पूर्णां प्राया भुवि भुवि जगत्पावनायावतीर्णाम् ॥
पाथः पातुं त्वयि गज इव प्रेक्ष्यमाणे प्रवृत्ते ।
त्वामाक्रष्टुं मकरनिकराः प्रोच्चलिष्यन्ति कामम् ॥३७॥

अर्णइति—अर्णोभिर्जलैः पूर्णां त्वत्काले महाप्रवाहवत्त्वादिति भावः। अतएव अभितः अभ्यर्णदेशेषु उपान्तप्रदेशेषु कीर्णां भुविभुवि प्रतिभूमि जगत्पावनाय पावनं कर्तुमित्यर्थः। अवतीर्णामुत्पन्नां पूर्णां सरितं तन्नामिकां नदीं प्रायाः। गजइव प्रेक्ष्यमाणे त्वयि पाथः पातुं प्रवृत्तेसति मकरनिकराः त्वामाक्रष्टुं गजबुध्या अन्तस्समाकर्षितुं कामं यथेच्छं प्रोच्चलिष्यन्ति ग्राहास्तु जलादुत्थाय दृष्टान्तस्समाकर्षन्तीति स्वभावः। अत्र गजसादृश्यमूलकगजभ्रान्त्युज्जीविता स्वभावोक्तिरिति ज्ञेयम् ॥

तारामुक्तासरविलसितत्वद्वितानाभिराम-
ब्रह्माण्डान्तर्गृहभुवि धरा शेषमञ्चे शयाना ॥
तत्र श्यामा जलधिवसना विन्ध्यकाञ्चीविभूषा ।
वक्षोभागे मृगमदरसैर्विष्णुनेवाभिलिप्ता ॥३८॥

अथैतद्देशे सर्वकृष्णां भूमिमालोच्याह तारेति—ताराएवमुक्ताः तासां सरोहारस्तेनविलसितं चतत् त्वं मेघएववितानं तेन अभिराममञ्चेति विशेषणोभयपदकर्मधारयः। तादृशं यद्ब्रह्माण्डमेवान्तर्गृहं तस्य भुवि प्रदेशे शेषएव मञ्चस्तस्मिन् शयाना शेषस्य धराधारत्वादिति भावः। तत्र श्यामा तद्देशावच्छेदेन श्यामवर्णा यौवनमध्यस्था च जलधिरेव वसनं यस्याः नीलवस्त्रसंवीतेति च। विन्ध्यएव काञ्चीविभूषा यस्याः एतादृशी धरा भूरेव नायिकेत्येकदेशविवर्ति-

रूपकं। वक्षोभागे तद्देशस्य उत्तराभिमुखशायितभूकान्तायाः वक्षोभागस्थानीयत्वादिति भावः। मृगमदरसैः कस्तूरीकर्दमैर्विष्णुना कान्तेन अभिलिप्तेवेत्युत्प्रेक्षा। तत्रत्यभूकृष्णत्वं निमित्तीकृत्य मृगमदलेपनमुत्प्रेक्षितमिति रूपकोज्जीवितेयमुत्प्रेक्षा। तया च यथा कश्चिन्नायकः काञ्चिन्नायिकां युवतिं नीलवसनसंवीतां काञ्चीभूषणाभिभूषितां मौक्तिकाञ्चितनीलवितानवत्यन्तर्गृहे मञ्चे शाययित्वा वक्षसि कस्तूरिकालेपनं करोति तद्वज्जगत्कर्ता हरिः चतुस्समुद्रमध्यवर्तिनीं विन्ध्यादिपर्वतशोभितां धरां उपरि नक्षत्रमण्डलमेघमण्डलपरिमण्डिते ब्रह्माण्डोदरे शेषोपरि निवेश्य विदर्भान्तराले कृष्णवर्णं कल्पयामासेत्युपमा व्यज्यतइत्यलङ्कारेणालङ्कारध्वनिः॥

नीलाकारे नभसि जलधौ नौरिव त्वं प्रसर्पन्।
मध्येमध्ये करिकरइवालम्बमानोऽम्बरान्तात्॥
गोदावर्यामुभयतटयोस्सेतुबन्धायमानो।
वृक्षेवृक्षे मधुपपटलीकान्तिमुत्पादयेथाः॥३९॥

अथ गोदावरीगमनमाह नीलेति—नीलाकारे नभसि नीलाकारे जलधौ नौरिव प्रसर्पन् प्रवहन्सन् मार्गे मध्येमध्ये करिकरइव अम्बरान्तादालम्बमानस्सन् गोदावर्यामुभयतटयोः तिर्यग्भूतैकाकारेण सेतुबन्धायमानस्सन् वृक्षेवृक्षे खण्डशः पिण्डीभूय सञ्चारेण मधुपपटलीकान्तिमुत्पादयेथाः। अत्र प्रतिपादमुपमेत्युपमाचतुष्टयस्य पौर्वापर्यविवक्षया यदनन्तरन्यायेनाङ्गाङ्गिभावस्सङ्करः॥

दूराद्धूमोद्गमइति भयाद्दृश्यमानो मृगीभिः।
मध्याह्ने त्वं तमइति शुचा मन्यमानश्च कोकैः॥
उग्रंपश्यैः क्षुधितहरिभिः किं घटेत्यूह्यमानः।
कृष्णातीरे वलितवपुषा कूर्मवत्सञ्चरेथाः॥४०॥

अथ कृष्णागमनमाह। दूरेति—हे मेघ! त्वं मृगीभिर्ग्रहीत्रीभिः धूमोद्गमइति दावधूमइति भयाद्दृश्यमानस्सन् कोकैश्चक्रवाकैर्गृहीतृभिः मध्याह्ने मध्याह्नेऽपीत्यर्थः राजाहस्सखिभ्यष्टच् । तमइति शुचा मन्यमानस्सन् रात्रौ तेषां विघटनादिति भावः । उग्रं पश्यन्तीत्युग्रं पश्यास्तैः उग्रंपश्येरम्मदेत्यादिनानिपातः। क्षुधितहरिभिः घटा गजबृन्दं किमित्यूह्यमानस्सन् कृष्णातीरे कृष्णानदीं प्राप्य तत्तीरे लुलितवपुषा खण्डशो विच्छिन्नवलितशरीरेण कूर्मवत्सञ्चरेथाः। समस्तृतीयायुक्तादित्यात्मनेपदं। अत्र मृगीकोकसिंहैरनेकैर्ग्रहीतृभिः भयशोकक्षुद्भिर्निमित्तैः एकएव मेघः धूमत्वतमस्त्वगजत्वैः प्रकारैर्ज्ञातइति ग्रहीत्रनेकत्वप्रयुक्तैकविशेष्यकोल्लिख्यमानानेकप्रकारत्वरूपोल्लेखालङ्कारः ॥

श्यामश्श्यामास्तटिदुपहतस्स्वर्णभूषाभिरामा
स्सन्ध्यारागस्फुरणसुभगस्साधुरक्ताः प्रियेषु ॥
अर्णः पूर्णस्सरसहृदयास्सत्पथस्थश्च साध्व्य
स्तत्रेक्ष्यन्ते त्वमिव रुचिराः काममान्ध्र्यः पुरन्ध्र्यः ॥४१॥

तत्रान्ध्रवधूदर्शनं ते भविष्यतीत्याह श्यामइति—हे मेघ! त्वं श्यामः नीलवर्णः ताश्च श्यामाः नीलाः यौवनमध्यस्थाश्च त्वं तटिदुपहतः ताश्च स्वर्णभूषाभिरामाः त्वं सन्ध्यारागस्फुरणसुभगः। ताश्च प्रियेषु स्वस्वपाणिग्राहकेषु साध्वकपटं रक्ताः रक्तवर्णाः अनुरक्ताश्च। त्वं अर्णःपूर्णः जलभरितः ताश्च सरसहृदयाः सरसं सोदकं प्रेमार्द्रं च हृदयं यासां ताः वोपसर्जनस्येति सहस्य सभावः। त्वं सतां नक्षत्राणां पन्थाः सत्पथः ऋक्पूरब्धूः पथामानक्षइति समासान्तोऽप्रत्ययः। तत्र तिष्ठतीति तादृशः साधुमार्गवर्ती च ताश्च साध्व्यः सन्मार्गवर्तिन्यः पतिव्रताश्च अतएव त्वमिव रुचिरास्त्वत्सदृश्यः आन्ध्र्यः आन्ध्रदेशोद्भवाः तत्रभवइत्यण् टिड्ढाणञित्यादिना ङीप्। पुरन्ध्र्यस्सुचरित्रास्स्त्रियः काममत्यन्तं तत्र कृष्णाप्रान्ते ईक्ष्यन्ते जनैरितिशेषः। त्वयापि

सभक्तिप्रकर्षं दर्शनीयाइति भावः। अत्र पुरन्ध्रीमेघयोरुपमानोपमेयभावस्या-प्रसिद्धावपि तत्सिध्यर्थं तद्विशेषणीभूतधर्माणां स्वर्णभूषाविद्युदानीनां साम्यस्य प्रसिद्धत्वात् विशेषणसाम्ये विशेष्यसाम्यं सिध्यतीत्यालङ्कारिकसमयमाश्रित्य तयोरुपमानोपमेयभावोनिबद्धः। इयमेव विम्बप्रतिविम्बभावापन्नधर्मप्रयोज्योप-मेति ज्ञेयम् ॥

तीर्त्वा कृष्णाजलमथ गुहानीतवातप्लवेन ।
श्रीमन्! गङ्गामिव धुरि चलन् चित्रकूटायमानम् ॥
पुण्यारण्यैः प्रथितनगरैः प्रेष्ठतीर्थैः परीतं ।
रम्यं मुन्याश्रमवलयितं रामदुर्गं प्रयायाः ॥४२॥

अथोद्दिष्टस्थानगमनमाह तीर्त्वेति—हे श्रीमन् मेघराज! गुहायाः रामदुर्गगुहाविलात् आनीतो यो वातस्स एव गुहेनानीतो वातप्लवनामकः प्लवस्तेन च गङ्गामिव कृष्णाजलं तीर्त्वा अथ धुरि अग्रे चलन्सन् चित्रकूटा-यमानं पुण्यारण्यैः प्रथितनगरैः विजयनगरादिभिः प्रेष्ठतीर्थैः पम्पादिभिश्च परीतं रम्यं मुन्याश्रमवलयितञ्च रामदुर्गं मत्प्रियावासस्थानं प्रयायाः प्रतिपद्येथाः। उपमालङ्कारः। पुरा यथा भरतः गुहेन निषादाधिपतिना आनीतेन वातप्लव-नामकेन वंशप्लवेन गङ्गां तीर्त्वा चित्रकूटं प्रायात्तद्वदित्यभिप्रायः ॥

यस्मिन् मर्त्या मथितमनसो मानुषीणां विलासैः ।
यस्मिन् मुक्तिप्रवणमतयो वीतरागा वसन्ति ॥
यस्मिन् रामश्चिरवसतये सीतया प्रार्थितोऽभू ।
द्यस्मिन् पूर्वं रघुपतिवराद्रामदुर्गाभिधाऽऽसीत् ॥४३॥

अथैकेन श्लोकेन रामदुर्गं वर्णयति यस्मिन्निति—यस्मिन् शैले मर्त्याः मानुषीणां विलासैर्विभ्रमैः मथितमनसस्तत्परवशाइतियावत्। यस्मिन् शैले मुक्तिप्रवणमतयः मोक्षापेक्षिणः वीतरागाः वैराग्यशालिनस्सिद्धसङ्घाः

वसन्ति विलासस्थानं मुक्तिस्थानं चैतदिति भावः। यस्मिन् शैले चिरवसतये रमणीयत्वाच्चिरं वस्तुं रामः वनवासार्थमागतः सीतया प्रार्थितोऽभूत्। यस्मिन् शैले रघुपतेश्श्रीरामस्य वरात्सीतामनःप्रीणनायै पूर्वं दत्तात् रामदुर्गाभिधा आसीत्। यो रामदुर्गनाम्ना ख्यातोऽभूदित्यर्थः ॥

तस्मिन् शैले भरतइव तं रामचन्द्रं विचिन्वन्।
त्वञ्च श्रीमन् त्वरितमभितस्सञ्चरन्नार्यपुत्रम् ॥
शापव्यापच्छकलितधृतिं शान्तिलक्ष्मीसमेतं।
माखे प्रातश्शशिनमिव तं म्लानकान्तिं भजेथाः ॥४४॥

तस्मिन्निति—हे श्रीमन् मेघराज! तस्मिन् शैले पूर्वोक्तरामदुर्गे तं चित्रकूटगतं रामचन्द्रं विचिन्वन् भरतइव त्वञ्च त्वरितं शीघ्रमभितस्सञ्चरन् शापव्यापच्छकलितधृतिं शापवशाच्छिन्नस्तधैर्यं शान्तिलक्ष्मीसमेतं अतएव माखे माखमासे प्रातश्शशिनमिव म्लानकान्तिं तं आर्यपुत्रं मन्नाथं भजेथास्सेवेथाः पश्येत्यर्थः। अत्र रामचन्द्रं विचिन्वन् भरतइव त्वं तमार्यपुत्रं भजेथा इत्युपमया एकदेशविवर्तिरूपकवदार्यपुत्रे रामचन्द्रसादृश्यं गम्यतइति ज्ञेयम् ॥

दृष्टे स्थाने यदि स न भवेत् दृश्यतामेष शैले।
कूटाग्रे वा कुलगिरिनिभे कन्दरे सुन्दरे वा ॥
कुञ्जे कूजन्मधुपपटलीमञ्जुगानान्विते वा।
सानौ सानौ पथिपथि वने निर्झरे निर्झरे वा ॥४५॥

दृष्टइति—स मन्नाथः दृष्टे स्थाने यत्र पूर्वं त्वया दृष्टः तत्र स्थानइत्यर्थः। न भवेद्यदि नास्तिवेदद्य एष चलितो मन्नाथः शैले रामगिरौ दृश्यतां तत्रतत्र विचीयतां। कुलगिरिनिभे कुलपर्वतवत् स्थूले कूटाग्रेवा सुन्दरेकन्दरेवा कूजन्मधुपपटलीमञ्जुगानान्विते कुञ्जे निकुञ्जेवा सानौ सानौवा पथिपथिवा

वनें परिसरारण्येवा निर्झरेनिर्झरेवा दृश्यताम् । यत्रकुत्रचिन्मनोविनोदनार्थं चलितस्स्यादिति भावः ॥

मद्वृत्तान्तश्रवणकुतुकात्त्वत्प्रतीक्षापरो वा ।
मासुत्तप्तां मनसि गणयन् मोहसम्मीलितो वा ॥
स्मृत्वा पूर्वान् स्वगृहविभवान् स्तम्भवन्निश्चलो वा ।
निद्राणो वा कथमपि स ते नेत्रपात्रीकृतस्स्यात् ॥४६॥

अथ त्रिभिश्श्लोकैः दर्शनकाले नाथस्य तत्तदवस्थां सम्भाव्य कालापकेन सूचयति, मदिति—स मे प्रियः मद्वृत्तान्तस्य श्रवणे कुतुकात्कुतूहलाद्धेतोः त्वत्प्रतीक्षापरोवा सन् मनसि मासुत्तप्तां गणयन्वासन् मोहेन मूर्च्छया सम्मीलितोमुकुलितनेत्रोवा सन् पूर्वान् अनुभूतपूर्वान् स्वगृहविभवान् स्मृत्वा स्तम्भेन तुल्यं स्तम्भवत् तेनतुल्यंक्रियाचेद्वतिरिति वतिप्रत्ययः । निश्चलस्स्तब्धीभूतस्सन्वा कथमपि निद्राणोवा वियोगग्लानिद्राऽभावेपि तां नाटयन्वासन् ते तव नेत्रपात्रीकृतस्स्यात् । सम्भावनायां लिङ् । उपमासंसृष्टा स्वभावोक्तिः॥

निद्राहीनो निटिलतटभून्यस्तवामार्धपाणिः ।
पश्चात्तिर्यक्कृतपरकरालम्बितांसोर्ध्वभागः ॥
वामे जानौ निहितनिजजान्वन्तरश्शोकमूला ।
न्युत्तानेनोच्छ्रयनविधिना मन्दमालोचयन्वा ॥४७॥

निद्रेति—निद्रया हीनः सन् निटिलतटभून्यस्तः वामार्धपाणिः स्ववामकरतलाञ्चलं येन तादृशः पश्चात्पृष्ठभागे तिर्यक्कृतः यः परकरः दक्षिणहस्तः तेनालम्बित उत्तम्भितः अंसोर्ध्वभागः कण्ठपृष्ठोर्ध्वभागः येन तादृशः । वामेजानौ उत्क्षिप्तवामजानूपरिभागे निहितं निजजान्वन्तरं दक्षिणजान्वधोभागः येन तादृश्च सन् शोकमूलानि दुःखकारणानि कर्म । उत्तानेनोच्छ्रयनविधिना किञ्चिदुन्नमितपूर्वकायेन उत्तानशयनविधानेन मन्दमालोचयन्वा नेत्रपात्रीकृतस्स्यादिति पूर्वेणान्वयः । स्वभावोक्तिः ॥

संस्तभ्य स्वं कथमपि मनः कन्दमूलान्यदन्वा ।
ध्यात्वाध्यात्वा तटदृषदि मद्भावचित्रं लिखन्वा ॥
वामे पाणौ विनमति मणीबन्धशीर्षेण मन्दं ।
मच्चिन्तातो मुहुरुपचितां मार्जयन्वाश्रुधाराम् ॥४८॥

संस्तभ्येति—कथमपि स्वं मनस्संस्तभ्य कथञ्चिन्निगृह्याहारोन्मुखीकृत्येत्यर्थः । कन्दमूलान्यदन्वा ध्यात्वाध्यात्वा पुनःपुनर्मदङ्गसौष्ठवमालोच्य तटदृषदि गिरिप्रस्थोपलफलके मद्भावचित्रं लिखन्वा वामे पाणौ विनमति सति मणीबन्धस्य प्रकोष्ठोपरिमणिबन्धनस्थानस्य शीर्षभागेन मच्चिन्तातो मदनुस्मृतिजनितखेदात् मुहुरुपचितां पुनःपुनःप्रवृद्धां अश्रुधारां मन्दं मार्जयन्वा सन् स ते नेत्रपात्रीकृतस्स्यादिति पूर्वेण सम्बन्धः । स्वभावोक्तिः ॥

दृष्ट्वा भ्रातस्तमिममचले तावकं भावकं म- ।
द्वाचा यद्यन्निगदितमिदं सर्वमाख्याहि तस्मै ॥
तस्मिन् शैले यदि तव दृशा नैव दृष्टस्तदाऽसौ ।
जानीहि त्वं विरहचपलः क्वाप्ययासीच्छुचेति ॥४९॥

अथ कर्तव्यमुपदिशति, दृष्ट्वेति—हे भ्रातः! मदग्रजेति वक्ष्यमाणभावकत्वानुरूपं सम्बोधनं । अचले रामगिरौ तमिमं तावकं भावकं दृष्ट्वा मद्वाचा यद्यन्निगदितं तदिदं सर्वं तस्मै आख्याहि कथय । असौ मन्नाथः तस्मिन् शैले तव दृशा नैव दृष्टो यदि तत्र स नास्ति चेदित्यर्थः । तदा विरहचपलस्सन् शुचा दुःखेन क्वाप्ययासीदिति जानीहि ॥

प्राणेशोऽयं विरहचपलः प्रायशो दाक्षिणात्यान् ।
देशान् यायात्त्वमपि दयया तं विचिन्वन् प्रयाहि ॥
मद्विज्ञप्तं समुपहर तं यत्रकुत्रापि पश्यन् ।
मध्ये सन्तो न खलु सुहृदामभ्युपेतं त्यजन्ति ॥५०॥

अथ मेघं रामदुर्गाद्दक्षिणं देशमपि प्रस्थापयिष्यन्ती तदनुकूलपीठिकामारचयति, प्राणेशइति—अयं मे प्राणेशः विरहचपलस्सन् प्रायशो विशेषाकारेण दाक्षिणात्यान् दक्षिणापुरस्सस्त्यगिति त्यक्प्रत्ययः। किति चेत्यादि वृद्धिः। देशान्यायात्सम्भावनायां लिङ्। त्वमपि दयया तं विचिन्वन् मृगयमाणस्सन् प्रयाहि रामगिरेर्दक्षिणदेशं प्रतिष्ठस्वेत्यर्थः। यत्रकुत्रापि तं पश्यन् सन् मद्विज्ञप्तं समुपहर तस्मै ब्रूहीत्यर्थः। लोके सन्तस्सज्जनाः सुहृदां मित्राणां सुहृद्दुर्हृदौमित्रामित्रयोरिति हृदयस्य हृदादेशः। अभ्युपेतमङ्गीकृतं कार्यं मध्ये कार्यसमाप्तेःपूर्वं न त्यजन्ति खलु। अतस्त्वमपि मत्कार्यमत्यजन् पूरय। अर्थान्तरन्यासः॥

तस्माद्दुर्गात्त्वरितमनघ! प्राप्य पम्पां ततस्त्वं।
पीत्वा तापप्रशमनविधौ तुङ्गभद्रामनिद्राम्॥
रम्ये रामाश्रमशुचितमे ऋश्यमूके विचिन्वन्।
तस्योपान्ते विहर वितते तत्रतत्र प्रवर्षन्॥५१॥

तस्मादिति—हे अनघ! त्वं तस्माद्दुर्गात् तद्दुर्गं विहायेति ल्यब्लोपे पञ्चमी। त्वरितं पम्पां तन्नामकं सरः पुरं च प्राप्य ततस्त्वं तापप्रशमनविधौ तापस्य शरीरतापस्य आध्यात्मिकादि त्रिविधतापस्य च प्रशमनविधौ अनिद्रां जागरूकां तापपरिहारिणीमिति यावत् तादृशीं तुङ्गभद्रां पीत्वा रम्ये दर्शनीयतीर्थक्षेत्रदेवतावनराजिभिर्नयनाभिरामे रामाश्रमशुचितमे ऋश्यमूके गिरौ विचिन्वन् तमिति शेषः वितते तस्योपान्ते तत्रतत्र प्रवर्षन्सन् विहर॥

मा स्म त्याक्षीर्विजयनगरं माधवाचार्यवर्यो।
मन्त्रैस्स्वीयैर्महितमहितैर्मन्त्रिणां मार्गदर्शी॥
संन्यस्तोपि स्वमहिमबलात्स्वर्णवृष्टिं वितेने।
यस्मिन् पश्चाद्विबुधविनुतं वेदभाष्यं व्यतानीत्॥५२॥

अथ त्रिभिः श्लोकैर्मुख्यांशप्रदर्शनपूर्वकं विजयनगरं वर्णयति, मा स्मेति—हे मेत्रराज! विजयनगरं मा स्म त्याक्षीः तत्र गमनं मोपेक्षिष्टाः । न माङ्योग इत्यडागमप्रतिषेधः । तत्र महामहिमाद्भुतचरित्रश्रवणादिति भावः । तदेव विशदयति । यस्मिन् विजयनगरे माधवाचार्यवर्यः माधवमन्त्रीति प्रसिद्धो निखिलशास्त्रपाण्डित्यचातुर्यशाली राजतन्त्रप्रवीणो मन्त्रिलक्षणसम्पन्नश्च मन्त्री । मन्त्रिलक्षणमुक्तं प्राचीनैः—

"दयावान्नीतिकुशलो वेदशास्त्रार्थपारगः ।
निर्ममोनिस्स्पृहश्शान्तो ब्राह्मणोऽमात्यउच्यते"

इति । महितमहितैरतिपूज्यैः प्रभोः प्रजानाञ्च प्रियङ्करैरित्यर्थः । स्वीयैर्मन्त्रैस्सद्सद्भिमर्शनैः मन्त्रिणां जातानां जनिष्यमाणानां चामात्यानां मार्गदर्शी । गुरुशुक्रकामन्दकचाणिक्यामात्यराक्षसादिवन्मार्गबोधकोभूदित्यर्थः । संन्यस्तोऽपि वित्तेषणादिरहितोपीत्यर्थः । स्वमहिमबलात् स्वतपोयोगबलात् स्वर्णवृष्टिं वितेने लोकहितार्थमिति भावः । अत्रेयं कथा—पुराकिल विजयनगरे माधवाचार्यः बुक्कनरपतेस्सन्निधावमात्यपदमलङ्कुर्वाणः लोकहितार्थं महत्तपश्चरन् महालक्ष्मीं महाधनसम्पत्तिमर्थयामास । सा च प्रसन्ना प्रत्यक्षीभूय साधक! तवास्मिन् जन्मनि महाधनसम्पत्तियोगो नास्तीति प्रतिबोध्यान्तर्दधे । ततस्स मन्त्री समालोच्य सन्न्यासं परिगृह्य पुनस्तपस्यन्नस्तावीद्देवीम् । स्तुतिप्रसन्ना सा पुनःप्रत्यक्षीभूय स्तावक! गतं ते तज्जन्म । इदानीं स्वर्णाकर्षणमन्त्रं ते ददामीति निगद्य कमपि मन्त्रमुपदिश्यान्तर्दधे । ततः प्रहृष्टमनास्स संन्यासिमन्त्री स्वर्णवृष्टिं प्रदास्यन् लोकानां तत्तद्गृहपतितं सुवर्णं तत्तद्गृहिणामेव ततोन्यत्रपतितं राज्ञः इतिव्यवस्थां कल्पयित्वा नियमेन तं मन्त्रमुच्चार्य सर्वत्रनगरसीम्नि सुवर्णवृष्टिमकार्षीदितिकथात्रानुसन्धेया । पश्चादनन्तरं विबुधविनुतं सकलविद्वच्छिरोलालितं वेदभाष्यं व्यतानीत् । तादृशं विजयनगरं मास्मत्या-

क्षीरिति पूर्वेणान्वयः । सएव भाष्यकारएव विद्यारण्यसंज्ञाविरुदं सम्पाद्य शृङ्गेर्यामद्वैताचार्यपदवीमलञ्चकारेति च ज्ञेयम् ॥

तस्मिन् देशे क्षितिभृति कुहूयोगमासाद्य पूर्वं ।
भीत्यान्यस्मै क्षितिपतिधुरां दित्सति त्रीण्यहानि ॥
मालां प्राप्तो मदकरिकरादेत्य राज्याधिकारं ।
सत्पात्रेषु व्यतरदमितं व्यासराजो यतीन्द्रः ॥५३॥

अथान्यदद्भुतं चरित्रं दर्शयति, तस्मिन्निति—तस्मिन् देशे विजयनगरदेशे क्षितिभृति विजयनगराधीशे कुहूयोगमासाद्य कुहूयोगोनाम पर्वप्रतिपत्सन्धौ विपघटिकायुक्ते नष्टेन्दुकले यत्र काले चत्वारोग्रहाः चण्डालयोगं प्राप्य द्वादशस्थाः स इति परिभाषितः । तदुक्तं ज्योतिस्सारसङ्ग्रहे—

"राहुणार्कार्किभूपुत्राः यदा चण्डालतां गताः ।
यस्य द्वादशगास्सद्यस्स राजा नश्यति ध्रुवं" इति ॥

त्रिदिनव्याप्तमेतादृशं कुहूयोगमासाद्य भीत्या प्राणापायभयेन अन्यस्मै त्रिदिनराज्यलाभमात्रसन्तोषिणे पुरुषाय क्षितिपतिधुरां राज्याधिपत्यं ऋक्पूरित्यादिना समासान्तोऽप्रत्ययः । त्रीणि दिनानि दिनत्रयपर्यन्तं कालाध्वनोरित्यादिना द्वितीया । दित्सति दातुमिच्छति सति अराजकत्वदोषपरिहारार्थमिति भावः । व्यासराजोनाम व्यासतीर्थइति प्रसिद्धः महामहिमशाली यतीन्द्रः मदकरिकरात् मालां पुष्पमालिकां प्राप्तस्सन् राज्याधिकारमेत्य स्वस्य दुर्योगपरिहारशक्तिसत्त्वादिति भावः । सत्पात्रेष्वमितं द्रव्यं क्षेत्रादिकञ्च व्यतरददत् । कारकाणां विवक्षायत्तत्वात्सप्तमी । अत्रेयं कथा—पुराकिल कर्णाटदेशे ब्रह्मण्यतीर्थनामा यतीन्द्रः कपिलाकावेरीसङ्गमादुत्तरदिशि गव्यूतिमात्रे तपस्यन्नुवास । कदाचिदनपत्यौ वैष्णवदम्पती तीर्थयात्रापरतया तं देशमाजग्मतुः । तयोः पुमान् केनापि व्याधिना जीवितदशामत्याक्षीत् । मृतभर्तृका सा ब्रा-

ह्मणी पत्या सह चिताधिरोहणमभिलषन्ती महदनुज्ञां लब्धुं ब्रह्मण्यतीर्थसन्निधिमेत्य प्राणंसीत्। स यतीन्द्रः तामालोक्य नारायणस्मरणपूर्वकं भवति! दीर्घसुमङ्गलाष्टपुत्रवती च भूयाः इत्याशिषं प्रायुङ्क्त। तदाकर्ण्य चित्रीयमाणचित्ता सा स्ववृत्तमखिलमस्मै निवेदयामास। तदनु स यतीन्द्रस्समालोच्य भद्रे! मद्वचनमन्यथा न भवेत्। त्वत्प्रसूतः प्रथमः पुत्रः सपदि मह्यमर्प्यतामित्यादिश्य तां व्यसर्जयत्। स्वस्थानं गता च सा सुप्तोत्थितमिव शोभमानं स्वभर्तारमालोक्य प्रहृष्यन्ती स्वकृत्यं मुनिवचनं च भर्त्रे न्यवेदयत्। स प्रहृष्य तत्रैव समीपग्रामे निवसन् यतीन्द्रसेवामकरोत्। अथ गर्भवती सा ब्राह्मणी दशमे मासे सुतमसूत। तौ दम्पती प्रसूतमात्रमेव तं शिशुं सुवर्णभाजने निक्षिप्य ब्रह्मण्यतीर्थायार्पयामासतुः। स मुनिस्तं स्नापयित्वा नामकरणादि कारयित्वा भगवदर्पितैः क्षीरैरभिवर्धयन् काले पितृभ्यामुपनाय्य संन्यस्तं विधाय व्यासतीर्थइति नामच प्रदाय लक्ष्मीनारायणतीर्थाद्वेदवेदान्तादिशास्त्राण्यभ्यासयत्। अथ च स भगवदनुग्रहवशादुत्कटां भक्तिमासाद्य विजयनगरोपान्ते तुङ्गभद्रातटे परमात्मानं श्रीहरिमाराधयन्नवर्तत। कदाचित्कुहूयोगभीतोराजा त्रिषु दिनेषु राजकर्म परस्मै दित्सन् कस्मिंश्चिदप्यननुमन्यमाने सति मन्त्रिभिस्सम्मन्त्र्य मदगजकरे मालां प्रदाय यस्यानयाकण्ठमलङ्करोति करी स राजा भवितुमर्हतीत्याघोष्य व्यसर्जयद्गजम्। स लीलया सञ्चरमाणो व्यासतीर्थकण्ठमलञ्चकार मालया। स समालोच्यास्मिन्देशे यः कुहूयोगकाले राजकर्म करोति स नश्यतीति ज्ञात्वापि स्वमाहात्म्यदिदर्शयिषया राज्यभारमङ्गीकृत्य बहूनि द्रव्याणि क्षेत्रादीनि च त्रिदिनमप्यविच्छेदेन श्रोत्रियसात्कृत्य राज्यकरणाद्व्यासराजनाम्ना समाम्नातो मठाधिपतिः द्वैताचार्यश्चसन् अवर्ततेति कथाऽत्रानुसन्धेया॥

ब्रह्मक्षत्रव्रततिविततं भूरिवाणिज्यपूर्णं।
पेन्गोण्डाख्यं प्रविश नगरं त्वत्सहायैकपाल्यम्॥

यस्मिन् रामक्षितिपतिमुखास्संस्कृतान्ध्रप्रवीणाः ।
काव्यज्ञानां कृतिषु कुतुकात्कल्पवृक्षाइवाऽऽसन् ॥५४॥

तदनन्तरदेशगमनमाह, ब्रह्मक्षत्रेति—ब्रह्मक्षत्रव्रतत्या ब्राह्मणक्षत्रियादिवर्णसमूहेन विततं विस्तृतं भूरिणा वाणिज्येन पूर्णं त्वत्सहायेन वृष्टिमात्रेण एकेन परिपोषणयोग्यं देवमातृकमित्यर्थः । पेन्गोण्डेत्याख्या नामपदं यस्य तादृशं नगरं प्रविश । यस्मिन् पेन्गोण्डनगरे प्रभुभावेन विदिताः रामक्षितिपतिमुखाः रामराजकृष्णराजतिरुमलराजादयः महाप्रभवः सौदर्यसौहार्दमेत्य आनेगोन्द्याख्ये विजयनगरसंस्थाने चन्द्रगिरिसंस्थाने च प्रभुत्वभाजस्सुप्रसिद्धमहाराजा इत्यर्थः । संस्कृतान्ध्रप्रवीणाः संस्कृतवाङ्मये आन्ध्रवाङ्मये च तलस्पर्शिपाण्डित्यवत्तया स्वयं ज्ञातारइत्यर्थः । अतएव काव्यज्ञानां नानाविधविच्छित्तिविशेषशालिकाव्यस्वरूपविदुषां अल्लसानिपेद्दनभट्टमूर्तितेन्नालरामकृष्ण प्रभृतिमहाकवीनां कृतिषु मनुचरित्रवसुचरित्र पाण्डुरङ्गविजयादिमहाप्रबन्धेषु विषये कल्पवृक्षा इव आसन् । कल्पवृक्षाः यथा सकलेष्टदा भवन्ति तद्वदेते प्रभवः कवीनां सकलेष्टप्रदा अभूवन्नित्यर्थः काव्यानां चिरकालस्थायियशः प्रदत्वादिति भावः । तदुक्तमाचार्यदण्डिना—

"आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयं ।
तेषामसन्निधानेपि न स्वयं पश्य नश्यति" इति ॥

तादृशं पेन्गोण्डाख्यं नगरं प्रविशेति पूर्वेणान्वयः ॥

प्रस्थायाथ प्रविश नगरं पण्डितैर्मण्डितं त्व- ।
न्मार्गे तस्मिन् महितचरितं मन्डिकल्नामधेयम् ॥
यस्योपान्ते रघुपतिधनुस्त्र्याचितव्यामदीर्घे ।
घोषाद्रौ सम्भ्रणमति जनो वेणुरूपं गुहायाम् ॥५५॥

अथैतद्ग्रन्थकर्तुः व्याख्यातुश्च कवेः रामशास्त्रिणः जन्मस्थानमभिवर्णयन् पावनमद्भुतं च चरितं बोधयति, प्रस्थायेति—अथ पेन्गोण्डाख्यनगरगम-

नानन्तरं तस्मिन् त्वन्मार्गे त्वद्गमनमार्गे पण्डितैः एतत्कविपितृपितृव्यपिता-महादिस्मार्तपण्डितैः वेङ्कटरामाचार्यवरदाचार्यप्रभृतिभिश्श्रीवैष्णवपण्डितैश्च म-ण्डितमलङ्कृतं महितचरितं सच्चारित्रानुवर्तिस्त्रीपुरुषभरितं मण्डिकल्नामधेयं नगरं प्रविश। यस्य मण्डिकल्नामकनगरस्य उपान्ते समीपप्रदेशे घोषाद्रौ तन्नामके पर्वते गुहायां वेणुमयं अष्टनिद्ध्यशोभितं च त्र्याचितव्यामदीर्घं त्रयः आचिताः विस्तृताः ये व्यामाः सकरबाहुप्रसाराः तद्वद्दीर्घं व्यामत्रयदीर्घप्रमा-णमित्यर्थः। एतादृशं रघुपतेश्श्रीरामस्य धनुर्वर्तते। तच्च जनः प्रणमति सर्वदा पूजया पुरस्करोतीत्यर्थः। तन्नगरं प्रविशेति पूर्वेणान्वयः। अत्र गुहा-स्थितधनुषः व्यामत्रयपरिमाणदर्शनात् तद्गृहीत्राच तावत्परिमाणेन भवितव्य-मिति श्रीरामकालिकाः जनाः इदानीन्तनजनापेक्षया त्रिगुणितप्रमाणाः अव-र्तन्तेति धनुर्दर्शनेन स्फुटं भवतीति ज्ञेयम्॥

तस्य प्रान्ते विलसति महान् धेनुशैलः प्रसिद्ध- ।
स्तस्मिन् शैले स्वयमुदभवच्छ्रीनृसिंहश्शिलायाम्॥
तस्यारण्ये महति शबरीलोचनैः पीयमानो ।
नत्वा देवं नयनसुभगं नन्दिदुर्गं प्रयायाः॥९६॥

तस्येति—तस्य घोषाद्रेर्मण्डिकल्नामक नगरस्य वा प्रान्ते क्रोशमा-त्रसमीपे प्रसिद्धः महान् धेनुशैलः भाषायामावलुकोण्डइति पटीरकाननरमणी-यः पर्वतः विलसति। तस्मिन्शैले श्रीनृसिंहो देवः शिलायां स्वयमुदभवत् महत्पुण्यक्षेत्रमित्यर्थः। तस्य गिरेः महत्यरण्ये शबरीलोचनैः पीयमानस्सन् देवं गुहामध्यशिलायां स्वयंव्यक्तं नृसिंहं नत्वा नयनसुभगं नन्दिदुर्गं तन्ना-मकं गिरिं प्रयायाः प्रतिपद्येथाइत्यर्थः॥

यस्योच्छ्रायः कुलगिरिनिभो यत्प्रसूताः पिनाकि- ।
न्याद्या नद्यः प्रसरणविधिर्यस्य गव्यूतिषट्के॥

वापी यस्मिन्नमृतसर इत्यस्ति सार्थाभिधा द्रा-।
गेकस्थूलोपलमयमिदं नन्दिदुर्गं परीयाः ॥५७॥

यस्येति—यस्य नन्दिदुर्गस्य उच्छ्रायऔन्नत्यं कुलगिरिनिभः कुलगिरिसमुच्छ्रायसदृशः। पिनाकिन्याद्याः पिनाकिनी क्षीरनदी चित्रावती अर्कावती पापघ्नीति पञ्च नद्यः यत्प्रसूताः यस्मान्नन्दिदुर्गादुत्पन्नाः। यस्य प्रसरणविधिः स्वोपान्तपर्वतैस्सह विस्तृतिः गव्यूतिषट्के द्वादशक्रोशपर्यन्तः। यस्मिन् नन्दिदुर्गे अमृतसरइति प्रसिद्धा सार्थाभिधाना अमृतसदृशजलवती वापी किञ्चिच्चतुरश्राकारमनोहरसरोवरं अस्ति प्रकाशते। एकः यः स्थूलोपलः तन्मयं तद्वद्दृश्यमानमित्यर्थः। इदं नन्दिदुर्गं द्राक् परीयाः प्रदक्षिणयेरित्यर्थः॥

सन्ध्याकाले शिवमभिनतो नन्दिनं वीक्ष्य मध्ये।
सोऽत्रेः पुत्रो भव गिरिरिति क्रोधभारादशाप्सीत्॥
नन्दी शापाद्भुवमनुसरन् नन्दिदुर्गात्मकोभूत्।
नन्दिस्नेहात्पशुपतिरिहागत्य नन्दीश्वरोऽभूत् ॥५८॥

अथ काञ्चित्कथामवतारयति, सन्ध्येति—स परमकोपनत्वेन लोकप्रसिद्धः अत्रेर्महर्षेः पुत्रस्तन्नेत्रोद्भवः दुर्वासा नाम महामुनिः सन्ध्याकाले कदाचित्सन्ध्यायां शिवं शङ्करमभिनतस्सन् सन्ध्याकाले शिवदर्शनस्य मुख्यत्वात्कृतनमस्कारस्सन्नित्यर्थः। मध्ये शिवस्य स्वस्य च मध्ये नन्दिनं वीक्ष्य प्रणम्योत्थानसमये स्वपुरोभागे पृष्ठं प्रसार्य शिवाभिमुखं पर्वतवदुन्नताकारेण स्थितं वृषभमालोक्येत्यर्थः। क्रोधभारात् प्रथमतः वृषभत्रिकदर्शनजनितकोपातिशयात् गिरिर्भवेत्यशाप्सीत्। तदा नन्दी तु शापाद्भुवमनुसरन् भूगतस्सन्निति यावत् नन्दिदुर्गात्मकोऽभूत् नन्दिदुर्गरूपमासादितवानित्यर्थः। पशुपतिश्शिवोपि नन्दिस्नेहादागत्य इह भूलोके नन्दीश्वरोऽभूत् नन्दिदुर्गे नन्दीश्वरइति ख्यातोऽभूदित्यर्थः। इति कथाऽनुसन्धेया॥

तस्मिन् शैले जलद! विहरन् विस्तृताधित्यकायां ।
कल्याणाख्यं प्रविश नगरं नित्यकल्याणपूर्णम् ॥
तत्रास्थानी लसति महती तत्र सर्वेऽधिकाराः ।
पाथोनाल्यः पथिपथि तटिद्दीपमालाश्च भान्ति ॥५९॥

अथ चतुर्भिश्श्लोकैः कल्याणपुरं वर्णयति । तस्मिन्निति—हे जलद! तस्मिन् शैले नन्दिदुर्गे विस्तृता विशाला या अधित्यका पर्वतोपरिभूमिस्तत्र विहरन्सन् नित्यकल्याणपूर्णं कल्याणाख्यं पुरं भाषायां वेङ्गळूरिति पत्तनं प्रविश । तत्र कल्याणपुरे महती अत्यायामवती आस्थानी भाषायां अठाराकच्छेरीति लसति सर्वोत्कृष्टत्वेन प्रकाशते । तत्रास्थान्यां सर्वे अधिकाराः राजकीयाष्टादशविधा अप्यधिकाराः निर्वर्त्यन्तइति शेषः । पथिपथि मार्गे मार्गे पाथोनाल्यः जलयन्त्रनलिकाः विद्युद्दीपमालाश्च भान्ति । जनोपयोगिसकलोपकरणसमृद्धा सा पुरीत्यर्थः ॥

तत्राङ्ग्लेयाः पथिपथि पदैस्सैनिकास्सञ्चरन्ते ।
लक्षैर्लक्षैर्धनिकवणिजस्तत्र पण्यैः पणन्ति ॥
कार्यागारेष्वयुतमयुतं कर्मकारा वलन्ते ।
यन्त्रन्यासाः पिदधति चलच्चक्रचक्रारवैर्द्याम् ॥६०॥

तत्रेति—तत्र कल्याणपुरे आङ्ग्लेयास्सैनिकाः पथिपथि पदैस्सञ्चरन्ते । तत्र सेनानिवेशस्य सत्त्वादिति भावः । समस्तृतीयायुक्तादित्यात्मनेपदम् । तत्र कल्याणनगरे धनिकवणिजः लक्षैर्लक्षैरनेकलक्षमितैः पण्यैः पणन्ति व्यवहरन्ति क्रयविक्रयविनिमयादिकं कुर्वन्तीत्यर्थः । कार्यागारेषु खनिव्रीहियन्त्रयानागारलोहागारादिषु कर्मकाराः कर्मकरनियन्तृजनाः अयुतमयुतं तावत्सङ्ख्याकाः वलन्ते तत्तत्कार्यकरणार्थमिति भावः । यन्त्रन्यासाः व्रीहियन्त्रवयनयन्त्रादिविन्यासाः चलन्ति यानि चक्राणि तेषामारवैः द्यामन्तरिक्षं पिदधति व्योमव्यापिघर्घरध्वनिमातन्वन्तीत्यर्थः । समृद्धिवर्णनादुदात्तालङ्कारः ॥

वीथ्यांवीथ्यां भुविभुवि जनैस्सम्भृतायां पुरेस्मिन् ।
अन्योन्येषां घटनभयतस्सङ्कुचन्तोपि लोकाः ॥
मोटाराख्यैर्महितशकटैस्सर्वतोप्यापतद्भि- ।
र्दिक्षु भ्रान्ता रथवरभयाद्भीतभीताश्चरन्ति ॥६१॥

वीथीति—अस्मिन्पुरे कल्याणपुरे वीथ्यांवीथ्यां भुविभुवि च सर्वत्र पुरभूमावित्यर्थः । जनैः पुरजनैस्सम्भृतायां सत्यां लोकाः पौरा जानपदाश्च अन्योन्येषां घटनभयतस्सङ्घट्टनभयात् सङ्कुचन्तोपि स्पर्शं परिहर्तुं सङ्कुचिताङ्गाअपि सर्वतः सम्पतद्भिः अग्रे पश्चात् तिर्यङ्मार्गाच्च समायाद्भिः मोटाराख्यैर्महितशकटैः दिक्षु भ्रान्ताः सन्तः रथवरभयाद्भीतभीता अतिभीतास्सन्तश्चरन्ति । बहुजनैः मोटाराख्यमहारथागमादिभिश्च सङ्कीर्णेयं पुरीति भावः ॥

आनीयन्ते क्वचन कनकप्रवररत्नादिकानि ।
प्रेष्यन्ते च क्वचन विततानर्घवस्तूनि भूयः ॥
शैलाकारे नरपतिगृहस्याग्रभागे निषण्णो ।
द्रक्ष्यस्येकस्थलमिव गतं सर्वमैश्वर्यमुर्व्याः ॥६२॥

आनीयन्तइति—क्वचन प्रवररत्नादिकानि हारकटकाद्यलङ्करणान्यानीयन्ते देशान्तरात्पुरापणाच्चेति भावः । क्वचन क्वचिद्भागे विततानर्घवस्तूनि प्रेष्यन्ते च पुरापणाद्गृहाच्चेति भावः । एवञ्च निरन्तरानीयमानप्रेष्यमाणानर्घवस्तुसम्पूर्णमिदं नगरमिति मुख्योर्थः । नरपतिगृहस्य शैलाकारे अग्रभागे शिखरे निषण्णः स्थितस्सन् स्थितश्चेदित्यर्थः । उर्व्यास्सर्वमैश्वर्यं सकलभूमिगतमैश्वर्यं एकस्थलगतमिव सर्वेभ्योदेशेभ्य आगत्य कल्याणनगरे पुञ्जीभूय स्थितमिव द्रक्ष्यसीत्युत्प्रेक्षया सकलपुरातिशायिसमृद्धिमद्वस्तुपूर्णत्वमस्य व्यज्यते ॥

सर्वाण्यस्यां पुरि दिशिदिशि प्रेक्षणीयानि पश्यन् ।
रामक्षेत्रं प्रविश तरसा रामगिर्याख्यमन्यत् ॥
यस्मिन् काकः प्रहतनयनो रामसुक्तेषुणा प्रा- ।
गद्याप्येतन्न विशति पदं काकलोकः कदाऽपि ॥६३॥

सर्वाणीति—अस्यां पुरि कल्याणपुरे दिशिदिशि विद्यमानानि सर्वाणि प्रेक्षणीयानि विचित्रमृगपक्षितरुलताशोभितोद्यानादीनि पश्यन्सन् रामगिर्याख्यं अन्यत् रामक्षेत्रं पूर्वोक्तरामदुर्गाद्भिन्नं श्रीरामोषितं स्थानं भाषायां क्लोसुप्याटेति तादृशं दुर्गं तरसा वेगेन प्रविश । तन्माहात्म्यमाह, यस्मिन्निति । यस्मिन् रामगिरौ काकः जयन्तनामा बलिभुक् प्राक् पूर्वं रामसुक्तेषुणा श्रीरामप्रयुक्तब्रह्मास्त्रेण प्रहतनयनः हृतैकदृष्टिः आसीदिति शेषः । अतएव काकलोकः काकसमूहस्तदेकतमोवा अद्यापि कदापि कस्मिन्नपि सन्दर्भे एतत्पदं रामगिरिं न विशति क्रोशमात्रं विहायान्यत्रैव सञ्चरतीति परीक्षकैर्ज्ञेयमित्यर्थः । अत्रेयं कथा—पुराकिल श्रीरामः पितृवाक्यमनुपालयन् सीतया सह वनाय प्रस्थाय चित्रकूटे निवसन् कदाचित्सीताया वामोरुं परिधानीकृत्य सुष्वाप । तदा जयन्तोनाम वायसः सीतास्तनतटमालोक्य परिणताम्रफलबुद्ध्या स्वत्रोटीपुटेनाकुट्टयत् । सीतया च हाहाकृते प्रबुद्धय रामस्सीतां रक्तसिक्ताङ्गीमालोक्य प्रकुपितस्सन् वायसं प्रति ब्रह्मास्त्रं प्रयुङ्क्ते स्म । तेनानुधाव्यमानो वायसस्त्रिलोकीमभिधाव्यापि विधिहरिहरेन्द्रादिभिः कैरप्यत्राय्यमाणः श्रीराममेव शरणीकृत्य शरणागतवत्सलेन तेन दक्षिणाक्षिमात्रहानेन रक्षितइति सुन्दरकाण्डसूचितकथात्राऽनुसन्धेया । तच्च दक्षिणाक्षिहानमस्मिन् रामगिरौ जातमिति तदत्र काकलोकः न प्रविशतीति च प्रसिद्धिरिति ज्ञेयम् ॥

तस्माद्गत्वा तनुजलकणैः कर्षकान् हर्षयन् सन् ।
पर्यायेणार्पितजलभरैः पूरयन् सन् तटाकान् ॥

बीजान्वापत्वरणनिरतान् धावयन् वृक्षमूले- ।
च्छिष्टावासं यदुकुलपतेर्यादवाद्रिं प्रयायाः ॥६४॥

तस्मादिति—तस्माद्रामगिरेर्गत्वा तं विहाय प्रस्थायेत्यर्थः । ल्यब्लोपे पञ्चमी । तनुजलकणैः कर्षकान् कृषीवलान् हर्षयन्मन् पर्यायेण कालभेदेन अर्पिताः ये जलभरास्तैः तटाकान् पूरयन् सन् बीजान्वापत्वरणे धान्यावापनत्वरायां निरतानुद्युक्तान् आवपतो जनानित्यर्थः । वृक्षमूलेषु धावयन् कार्यमध्ये वृष्टिपतने तद्विरतिपर्यन्तं वृक्षमूलस्थितेर्ग्राम्यजनस्य स्वाभाविकत्वादिति भावः । यदुकुलपतेः श्रीमन्नारायणस्य इष्टावासं यादवाद्रिं यदुगिरिं प्रयायाः तमुद्दिश्य व्रजेरित्यर्थः ॥

तस्मिन् संसृत्युदधितरणिश्रीनृसिंहाद्रिमूले ।
कल्याणीति प्रथितमहिमा कापि वापी विभाति ॥
तस्यास्तीरे जयति नगरी कापि नारायणीया ।
तस्यां श्रुत्यामिव हरिपदं देवतागारमास्ते ॥६५॥

चतुर्भिर्यदुगिरिं वर्णयति, तस्मिन्निति—यस्मिन् यदुगिरौ संसृतिरूपं नारकत्वखोऽम्बुधिस्समुद्रः दुस्तरत्वादिति भावः । तस्य तरणिर्नौका तारकत्वादिति भावः । तादृशः यः श्रीनृसिंहाद्रिः यदुगिरेरुपरिवर्तमानः श्रीनृसिंहदेवाधिष्ठितश्च गिरिः तस्य मूले तदुपत्यकायामित्यर्थः । प्रथितमहिमा कल्याणीति नामतोऽर्थतश्च प्रसिद्धा कापि विशाला चतुरश्रा ऋषिजुष्टजलाचेति विलक्षणेत्यर्थः । एतादृशी वापी विभाति । तस्यास्तीरे काप्यनिर्वाच्यमहिमवती नारायणीया तन्निवासयोग्येत्यर्थः । नगरी नारायणपुरी भाषायां मेलुकोटे तिरुनारायणपुरं इतिच जयति सर्वोत्कर्षेण वर्तते । तस्यां नारायणपुर्यां श्रुत्यां "विश्वंनारायणंहरिं" इत्यादिवेदानुपूर्व्यां हरिपदमिव हरिशब्द इव देवतागारमास्ते मनोहरतया प्रकाशते ॥

तत्रागारे तरुणतुलसीदाम धामाभिरामं ।
नीलाकारं निगमविनुतं नित्यलक्ष्मीसमेतं ॥
दिव्यं किञ्चिज्जगति विदितं दीपितार्कादिदीपं ।
धन्यैर्भक्तैर्दहरकुहरध्येयमालोकयेथाः ॥६६॥

तत्रेति—तत्रागारे तस्मिन् देवतागारे तरुणं तुलसीदाम यस्य तादृशं अभिरामं दर्शनमात्रेण हृदयाह्लादकं नीलाकारं निगमविनुतं नित्यलक्ष्मीसमेतं दिव्यं दिवि भवं द्युलोकप्रसिद्धमित्यर्थः । किञ्चिदनिर्वाच्यं जगति विदितं चतुर्दशभुवननियामकत्वादिति भावः । दीपितार्कादिदीपं "तस्य भासा सर्वमिदं विभाति" इति श्रुतेरिति भावः । धन्यैः कृतार्थैर्भक्तैः दहरकुहरे हृदयकमलान्तराकाशे ध्येयं तस्य परमात्माभिव्यक्तिस्थानत्वादिति भावः । एतादृशं धाम वैष्णवं तेजः आलोकयेथाः एतादृशं भगवन्तमालोक्य स्वीयं जन्म सार्थकं कुर्विति भावः ॥

ढिल्लीनाथप्रियदुहितृतां प्राप्तवत्यां रमायां ।
गूढं क्रीडन् श्वशुरभवने यश्चिराय न्यवात्सीत् ॥
भक्तप्रीत्यै प्रमुदितधियाऽभ्येत्य सम्पत्कुमार- ।
स्ताक्ष्यानीतं वहति मकुटं प्रत्नरत्नप्रदीप्तम् ॥६७॥

ढिल्लीति—हस्तिनावत्याः ढिल्लीति देहलीति च संज्ञा । पुराकिल रमायां ढिल्लीनाथस्य तुरुष्कमहाप्रभोः प्रियदुहितृतां प्राप्तवत्यां शापवशात्तुरुष्कमहाराजपुत्रीभावेनावतीर्णायां गूढं क्रीडन् यस्सम्पत्कुमारस्तदाख्योमहाविष्णुरित्यर्थः । श्वशुरभवने देहलीनाथगृहे चिराय न्यवात्सीत् "श्वशुरगृहनिवासस्स्वर्गतुल्योजनानां" इति न्यायादिति भावः । स सम्पत्कुमारः भक्तप्रीत्यै भक्तानां प्रियं कर्तुमित्यर्थः । प्रमुदितधिया अभ्येत्य यदुगिरिं प्रत्यागत्य तार्क्ष्येण गरुडेन आनीतं भक्त्या देवलोकादानीतं प्रत्नरत्नप्रदीप्तं मकु-

टं भाषायां वैरमुडीति प्रसिद्धं वहति । तादृशं किरीटं वहन् भक्तान् प्रीणयतीत्यर्थः । अत्रेयं कथा—पुरा किल श्रीरामानुजयतीन्द्रः श्रीरङ्गाद्यदुगिरिमासाद्य महारण्यमूते तत्र वल्मीकनिमग्नं नारायणविग्रहं विलोक्य विशोध्य शास्त्रतः प्रतिष्ठाप्य देवागारादिकं च कृत्वा उत्सवविग्रहार्थं स्वप्नवशात् ढिल्लीराजगृहं गत्वा राजसम्मानितस्सन् राजपुत्रीक्रीडाविग्रहीभूतं तद्गूढवल्लभं सम्पत्कुमारं राजानुमत्या राजपुत्र्या सह समानीय यदुगिरौ प्रतिष्ठाप्य भगवति लीनां तामर्चाविग्रहतामनीनयदिति प्रपन्नामृतसूचिता कथात्रानुसन्धेया ॥

श्रीमद्रामानुजयतिपतिर्विस्तृताम्नायसिन्धो- ।
स्सेतुं बद्ध्वा स्वयमरचयत्सारिणीं भाष्यरूपाम् ॥
तामानीय प्रकृतिकठिनान् भूभृतोऽतीत्य दूरा- ।
च्छिन्ध्यग्रामाननयदखिलान् मोदयन् यादवाद्रौ ॥६८॥

श्रीमदिति—श्रीमान् रामानुजयतिपतिः विस्तृता आम्नायो वेदएव सिन्धुर्नदी तस्याः सेतुं मृच्छिलादिभिस्तिर्यग्बन्धनं वेदानां विशिष्टाद्वैतसिद्धान्तोचितार्थनिबन्धनञ्च कृत्वा भाष्यरूपां सारिणीं स्वयमरचयत् । प्रकृतिकठिनान् स्वभावतः कठिनान् कठिनस्वभावांश्च भूभृतः पर्वतान् शैवभूपतींश्च अतीत्य विच्छिद्यविच्छिद्य दृष्टिगोचरतामनीत्वा च तां सूत्रभाष्यसारिणीं दूराद्दूरदेशात् आनीय यादवाद्रौ अखिलान् जनान्मोदयन् सन् शिष्याएव ग्रामास्तान् अनयत् । अत्र यादवाद्रौ भाष्यं शिष्यान् बोधयन् प्रचारयामासेति मुख्योर्थः । रूपकालङ्कारः ॥

गत्वा तस्माद्गगनपदवीमेकपाताभिगम्यं ।
कावेर्या संवलितमभितः प्रेक्षणीयाभिरामम् ॥
घोरं लङ्कापुरमिव पुरा योधयूथाग्रगण्यै- ।
श्श्रीरङ्गाख्यप्रभुविलसितं पत्तनं प्रत्नमेहि ॥६९॥

गत्वेति—तस्माद्यदुगिरेः गगनपदवीमन्तरिक्षमार्गं गत्वा एकपाताभिगम्यं एकेनैव प्लवनेनाधिगन्तुं योग्यं तत्समीपस्थमित्यर्थः। कावेर्या नद्या संवलितं परीतं अभितः इतस्ततः प्रेक्षणीयाभिरामं पुरा पूर्वप्रभुत्वकाले योधयूथाग्रगण्यैर्लङ्कापुरमिव घोरं क्रूराक्रान्तत्वादिति भावः। श्रीरङ्गाख्यो यः प्रभुस्तेन भगवता श्रीरङ्गराजेन च विलसितं प्रकाशितं प्रत्नं पुरातनं पत्तनं श्रीरङ्गपत्तनं एहि प्राप्नुहि ॥

पौलस्त्याशां पदनखरुचा पाटलाभां वितन्वन्।
कोटीराश्मद्युतिकवचितां कल्पयन् दक्षिणाशाम् ॥
श्रीभूदेवीकरकमलसंवाह्यमानाङ्घ्रियुग्म-।
श्शेते रङ्गो भुजगशयने द्रोणधानोपधानः ॥७०॥

अथादिरङ्गस्य भगवतश्शयनवैभवं वर्णयति, पौलस्त्येति—रङ्गो-रङ्गनाथः पदयोः प्रवालाभयोर्नखानामर्धचन्द्रायमाणानां रुचा कान्तिपुञ्जेन पौलस्त्याशामुत्तरदिशं पाटलाभां सतीं वितन्वन् विदधानस्सन् दक्षिणाशां दक्षिणदिशं कर्म कोटीरे ये अश्मानः मरकतमाणिक्यतारहीराद्यस्तेषां द्युतिभिः कवचितां सर्वतोव्याप्तां सतीं कल्पयन् उत्तरे पादौ प्रसार्य दक्षिणशिरस्कोदृश्यतइत्यर्थः। श्रीभूदेव्योः करकमलाभ्यां कमलवन्मृदुहस्ताभ्यां संवाह्यमानमङ्घ्रियुग्मं यस्य तादृशश्च सन् द्रोणधानं मानविशेषः तदेवोपधानं यस्य द्रोणपात्रमुपधानीकृत्य दृश्यमानश्च सन्नित्यर्थः। भुजगशयने शेषशय्यायां शेते लोकानुग्रहार्थं योगनिद्राभिनयमातनोतीति भावः ॥

रम्याकारं जलधर! ततो राङ्गनाथं विमानं।
साध्वीभक्तिस्त्वमतिविनतस्त्रिः परिक्रम्य सद्यः ॥
कार्णाटीनां कुटिलकुटिलैः कुन्तलैः कोमलाभैः।
मैत्रीं लब्धुं महिसुरपुरीं राजधानीमुपेयाः ॥७१॥

रम्येति—हे जलधर! साध्वी समीचीना भक्तिर्यस्य स साध्वीभक्तिः भक्तिशब्दस्य प्रियादिगणपठितत्वात् स्त्रियाः पुंवदित्यादिना न पुंवद्भावः। एतादृशस्त्वं अतिविनतस्सन् रङ्गनाथस्येमं राङ्गनाथं विमानं तदालयोपरिगोपुरं त्रिस्त्रिवारं परिक्रम्य प्रदक्षिणीकृत्य सद्यः प्रदक्षिणानुपदमेव कार्णाटीनां कर्णाटदेशोद्भवानां महीशूरपुरवधूटीनामिति यावत्। कुटिलकुटिलैः कुटिलप्रकारैः तरङ्गपरम्परावल्लुलितलुलितैरित्यर्थः। कोमलाभैः नयनानन्ददायिमसृणनील-कान्तिनिचितैः कुन्तलैः केशपाशैः मैत्रीं सादृश्यं स्नेहं च लब्धुं राजधानीं महाराजावासस्थानभूतां महिसुरपुरीं मह्यां सुरपुरीं भूस्वर्गभूतां किञ्च महि-सुराः ब्राह्मणाः तेषां पुरीं महिशूरदेशस्य चिरकालादारभ्य ब्राह्मणैरेवोद्धृतत्वा-दिति भावः। उपेयाः प्राप्नुयाः। तत्र विलोकनीयानां बहूनां सत्वादिति भावः॥

गेहेगेहे नयनसुभगैर्यन्त्रधूमायनोत्थैः।
धूमस्तम्भैर्वियति विततैरानताग्रैरनेकैः॥
प्रत्युत्थाय प्रणमनपरैस्त्वां समीक्ष्यात्र हर्षात्।
पङ्क्तीभूतैरिव परिजनैः प्राप्स्यसे गौरवर्धिम्॥७२॥

अथ द्वादशभिश्श्लोकैर्महीशूरपुरीं वर्णयति, गेहेगेहइति—अत्र महीशूरपुर्यां गेहेगेहे प्रतिगेहं नयनसुभगैः नेत्रमनोहरैः यन्त्रधूमायनोत्थैः वीथ्यां-वीथ्यां पङ्क्तीभूतगृहोपरिभागे धूमनिर्गमनार्थं निवेशितायोनलिकासमुद्गतैः वियति विततैराकाशव्याप्तैरानताग्रैरनेकैर्धूमस्तम्भैः कर्तृभिः त्वां दूरदेशादागतं प्रभुमालोक्यातिहर्षात् उत्थाय पङ्क्तीभूय प्रणमनपरैः परिजनैस्स्वसेवकजनैरिव गौरवर्धिं गौरवातिशयं प्राप्स्यसे। धूमस्तम्भानां त्वज्जातीयत्वात्परिजनत्वो-त्प्रेक्षा। तादृशालङ्कारवती सा पुरीत्यर्थः॥

तस्यां पुर्यां जलद! विहरन् वीथिकानां सहस्रे।
वर्षन्नम्भो विततमसकृद्भीषणं मा स्म गर्जः॥

देहल्यां त्वद्वितितकरकासङ्ग्रहाय भ्रमन्त्यः ।
कन्याः काश्चित्तत्र पृथुरवाद्भीतभीताः भवेयुः ॥७३॥

तस्यामिति—हे जलद! तस्यां पुर्यां महीशूरपुर्यां वीथिकानां सहस्रे विहरन्सन् विततं विस्तृतमम्भोवर्षश्च सन् असकृद्भीषणं यथातथा मास्म गर्जेः। कुत इत्यत आह—त्वद्वितितानां त्वदुत्सृष्टानां करकाणां वर्षोपलानां सङ्ग्रहाय देहल्यां तत्पुरगृहालिन्दोपान्ते भ्रमन्त्यः काश्चित्कन्याः पुरकन्यकाः तत्र पृथुरवात् भीतभीताः भवेयुः। अतः मास्मगर्जेरिति पूर्वेणान्वयः। विशालेयं पुरी समृद्धबहुकुटुम्बिसम्पूर्णेति भावः ॥

वीथ्यांवीथ्यां प्रतिगृहमपि स्थापिते लोकहेतो ।
स्सर्वां रात्रिं दिनयति तटिद्दीपजालप्रकाशे ॥
पुंवेषेण प्रियगृहमभि प्रस्थिताः पक्ष्मलाक्ष्यः ।
पार्श्वेऽप्यन्यैरविदितभिदास्तत्र धीरं प्रयान्ति ॥७४॥

वीथीति—तत्र महिशूरपुरे वीथ्यांवीथ्यां प्रतिगृहमपि गृहेगृहेपि लोकहेतोः जनोपयोगार्थं षष्ठीहेतुप्रयोगइति षष्ठी। स्थापिते महाराजाज्ञया नियमिते तटिद्दीपजालप्रकाशे विद्युद्दीपपरम्पराप्रकाशे सर्वां रात्रिं दिनयति दिनमिवाहरिव कुर्वति सति तत्र पुरे तमोलेशस्याप्यनवकाशतया सर्वत्र प्रकाशमाने सतीत्यर्थः। पक्ष्मलाक्ष्यः अभिसारिकास्स्त्रियः पुंवेषेण पुरुषालङ्कारं धृत्वेत्यर्थः। प्रियगृहमभि प्रस्थिताः स्वाभीष्टनायकगृहाभिमुखं प्रयातास्सत्यः नक्तं स्त्रीवेषेण सञ्चारे स्वरहस्यभेदभयादिति भावः। पार्श्वेपि अन्ये स्त्रीपुंसैरविदितभिदास्स्त्रीत्वेनाज्ञाताश्च सत्यः धीरं सधैर्यं प्रयान्ति पुरुषवदेव व्रजन्तीत्यर्थः। सर्वत्र तटिद्दीपैश्चमत्कारिणीभिर्विलासिनीभिश्च विलसितेयं पुरीति भावः ॥

तस्यां राज्ञीविरचितमहापाठशालात्तविद्याः ।
प्रेक्ष्याः प्रेष्ठाभरणवसनैः प्रौढविद्याप्रवीणाः ॥

वीणालापैर्विनयविभवैर्वल्गुवाचां विलासैः ।
गेहेगेहे निजनिजजनान् प्रीणयन्ते तरुण्यः ॥७५॥

तस्यामिति—तस्यां महीशूरपुर्यां गेहेगेहे तरुण्यः निजनिजजनान् प्रीणयन्ते । कैःकैः करणैरिति चेत् वीणालापैः विनयविभवैः वल्गवः मनोज्ञाः ये वाचां प्रौढवचनानां विलासास्तैश्च । ताश्च कीदृश्य इति चेत् राज्ञीविरचितमहापाठशालात्तविद्याः राज्ञ्या वर्तमानमहाराजजनन्या विरचिता स्त्रीजनोद्धरणाय कारिता या महापाठशाला महाराणीकालेजिति प्रसिद्धा । तस्यामात्तं मासिमासि सम्पादितं वित्तं याभिस्तादृश्यः । किञ्च प्रेक्षाभरणवसनैः प्रेक्ष्याः । किञ्च प्रौढविद्यासु बि. ए. एम्. ए. इत्यादि नवीनोन्नतविद्याकक्ष्यासु प्रवीणाः निपुणाश्च । तथाचात्र स्त्रीविद्याप्रचारः प्रबलतरस्त्यां नीयतइति मुख्योऽर्थः ॥

विद्युच्छक्त्या सततविततैर्नालिकान्तर्निरुद्धैः ।
प्राप्ते रन्ध्रे पुरविभवसम्प्रेक्षयेवोत्पतद्भिः ॥
कावेरीयैर्मधुरमधुरैः पावनैश्चाम्बुपूरैः ।
स्तोयाधाराश्चिरविरचितास्तत्र सन्ते परास्ताः ॥७६॥

विद्युदिति—विद्युच्छक्त्या दूराच्छिवसमुद्राख्यकावेरीजलनिपातात्तन्त्रीमुखेनानीय कावेरीजलोत्तारणार्थमुपयुक्तया विद्युद्यन्त्रबलेन सततविततैः अहोरात्रमुद्धृत्योद्धृत्य सारिणीमुखेनानीयमानैः नालिकान्तर्निरुद्धैः अयोनालिकान्तरे प्रवेश्य निरुध्य पुरमध्ये तत्रतत्रोपयुज्यमानैः अतएव रन्ध्रे किञ्चिदवकाशे प्राप्तेसति पुरविभवसम्प्रेक्षया पुरालङ्कारदिदृक्षयेवोत्पतद्भिरिति हेतूत्प्रेक्षा । कावेरीयैर्मधुरमधुरैः पावनैश्चाम्बुपूरैः स्वेच्छाक्रियमाणसकलपौरस्नानपानादिपर्याप्तकावेरीसरिन्मधुरजलसमृद्धिभिः करणैरित्यर्थः । तत्र महिशूरपुरे विद्यमानाः चिरविरचितास्तोयाधाराः वापीकूपतटाकादयः सर्वेपि

परास्ताः निर्जिताः शयनासनादिस्थलप्राप्याम्बुसौकर्यादिति भावः । किञ्च परास्ताः प्राचीनास्ते विनाशिताश्च । तथाच कावेरीजलसमृद्धेयं पुरीति मुख्यार्थः ॥

ग्रीष्मे प्रौढैस्तपनकिरणैस्तापितास्तत्र लोकाः ।
शान्ताशङ्कास्तदपि कुतुकात्स्वस्वकार्ये प्रवृत्ताः ॥
पश्चात्कण्वाश्रमपरिलसत्कृष्णराट्सागरोद्य
त्पाथोवातैः प्रशमितपरिश्रान्तयः प्रोत्सहन्ते ॥७७॥

ग्रीष्मइति—तत्र महिशूरपुरे ग्रीष्मे ग्रीष्मर्तौ लोकाः जनाः प्रौढैस्तपनकिरणैः तापितास्सन्तापिता भवन्ति । तथाप्यत्र पश्चादेतत्पुरपश्चिमोत्तरभागे कण्वाश्रमे भाषायां कन्नम्बाडीति प्रसिद्धे परिलसन् यः कृष्णराट्सागरः कृष्णराजसमुद्रनाम्ना ख्यातः महान् कावेरीसेतुबन्धः तस्मादुद्यन्तो ये पाथोवाताः जलवाताः तैः प्रशमितपरिश्रान्तयस्सन्तः प्रोत्सहन्ते स्वस्वकार्ये प्रवर्तन्ते इति भावः । तथाच कृष्णराजसमुद्राख्यः महान् कावेरीतटाकः अत्र निबद्धोस्तीति मुख्योर्थः ॥

तत्रोत्कीर्णाचलइव महद्राजते राजगेहम् ।
हेषाघोषैर्मदगजमदैः पूरितप्राङ्गणाढ्यम् ॥
विद्युद्दीपायुतपरिवृतोत्तुङ्गतद्गोपुराग्रे ।
दृश्यं दूरादपि निशि महद्दीपमाणिक्यमिन्धे ॥७८॥

तत्रेति—तत्र महिसुरपुरे उत्कीर्णाचलइव एकं पर्वतमानीयोचितस्थले निवेश्य स्तम्भप्रासादकक्ष्यान्तर्गृहगोपुरादिकं यन्त्रटङ्केनोत्कीर्णं चेत् स गिरिः यथा दृश्येत तद्वद्दृश्यमानं हेषाघोषैर्मदगजमदैश्च पूरितप्राङ्गणाढ्यं च तदाकीर्णमहाजिरं। चतुरङ्गबलस्य तद्वारस्थितत्वादिति भावः । महद्राजगेहं राजते सकलाधिकत्वेन प्रकाशते । विद्युद्दीपानामयुतसङ्ख्यया परिवृते उत्तुङ्ग-

तद्गोपुराग्रे शिखराग्रे दूरादपि दृश्यं गोपुराग्रस्य अत्युन्नतत्वादिति भावः । निशि रात्रौ सर्वदा महद्दीपमाणिक्यमिन्धे सर्वस्यां रात्रौ प्रकाशत इत्यर्थः । तथाचात्र मसृणशिलानिबद्धं विद्युद्दीपानेकयन्त्रपरिवृतं महाशिखरदीपविराजितञ्च महन्महाराजगेहं विराजत इति मुख्योऽर्थः ॥

तत्रास्थाने बुधगुरुकविश्रेणिरत्नावकीर्णे ।
पेटीभूतोरगपतिरिव प्रेक्ष्यते सिंहपीठम् ॥
साम्राज्यार्हं फणिफणइव छत्रमाभाति यस्मिन् ।
तस्मिन् सत्योद्धरणनिपुणश्शोभते लोकपालः ॥७९॥

तत्रेति—बुधगुरुकविश्रेणिरत्नावकीर्णे बहूनां बुधानां विदुषां गुरूणां त्रिमताचार्याणां कवीनां महाप्रबन्धकर्तॄणां श्रेणिरेव रत्नानि तैरवकीर्णे बुधबृहस्पतिशुक्रश्रेण्या । रत्नैः चिन्तामणिप्रभृतिभिश्च सम्पूर्णे तत्रास्थाने महाराजास्थाने पेटीभूतोरगपतिरिव सिंहपीठं सिंहासनमेकं प्रेक्ष्यते यस्मिन् सिंहपीठे साम्राज्यार्हमभूल्यरत्नखचितं छत्रमेकं फणिफणइवाभाति । शोभते । तस्मिन् सिंहासने सत्योद्धरणनिपुणः "सत्यमेवोद्धराम्यहम्" इति प्रतिज्ञामनुपालयन् लोकपालः शोभते । तथाचात्र सत्येन प्रजाः परिपालयन् महाराजः श्रीमन्नाल्वडिकृष्णराजसार्वभौमस्स्वयमास्थानीमधितिष्ठतीति मुख्योर्थः । अत्र आस्थानस्य बुधेत्यादिविशेषणबलात्सुधर्मासादृश्यं व्यज्यतइति ध्येयम् ॥

तस्मिन् नानामृगगणयुतं कौतुकस्थानमास्ते ।
तत्र द्वास्थैः निशितमतिभिर्गृह्यते द्वारमूल्यम् ॥
तच्चे माभूज्जलधर! चिरं व्योम्नि तिष्ठन् प्रपश्ये ।
राकाशैवाम्बुधिपयसि वा सर्वएव स्वतन्त्रः ॥८०॥

तस्मिन्निति—तस्मिन् महीशूरपुरे नानामृगगणयुतं कौतुकस्थानं प्रेक्षणीयविनोदस्थानमास्ते । राजावासस्थानचिह्नत्वादिति भावः । तत्र

निशितमतिभिर्द्वास्थैः यं कश्चिदपि अदातारमप्रवेशयद्भिः द्वारपालकैरित्यर्थः। द्वारमूल्यं गृह्यते अन्तःप्रवेष्टॄन् द्रष्टॄन् निरुध्य दर्शनकररूपमेकैकमानकं तदधिकञ्च गृह्यत इत्यर्थः। हे जलधर! ते तत्र तद्द्वारमूल्यं माभूत् त्वया न देयमेव। कुत इत्यतआह—त्वं तावत् व्योम्नि तिष्ठन् सन् चिरं प्रपश्येः तत्र मूल्यग्रहणनिर्बन्धानवकाशादिति भावः। कथमेतदित्यतआह—आकाशे वा अम्बुधिपयसि वा सर्वएव जनः स्वतन्त्रः मूल्यं विनापि स्वेच्छया व्यवहर्तुं स्वतन्त्रः। परमेश्वरं विना कस्याप्याकाशाधिपतित्वाभावात्समुद्राधीशत्वाभावाच्चेति भावः। तथाचात्र रम्यं कौतुकस्थानं वर्तते तत्र बहवः प्रविश्य हृष्यन्तीति मुख्योऽर्थः॥

तद्गर्भस्थे तरुणभरिते विश्वविद्यालये वा।
विद्यार्थिभ्यो विभुविरचिते वेदशास्त्रालये वा॥
आस्थाने वा महितविभवे मेरुशृङ्गायमाणे।
भूयोभूयो विचिनु मम तं प्राणनाथं प्रयातम्॥८१॥

अथ महीशूरपुरीगमनप्रयोजनमाह तद्गर्भेति—तद्गर्भस्थे महीशूरपुरान्तर्भागस्थिते गर्भशिशुवद्बाल्यावस्थापन्न इत्यर्थः। तरुणभरिते तरुणैर्विद्यार्थिभिरुपाध्यायैश्च सम्मिलिते विश्वविद्यालये भाषायां यूनिवर्सिटीति प्रसिद्धविद्यापीठे वा प्रयातं इतो गतं तं मम प्राणनाथं भूयोभूयः पुनःपुनः विचिनु परिमार्गय। तरुणमध्ये विद्यागोष्ठीविलोकनकुतूहलेन मिलितस्स्यादित्याशयः। विद्यार्थिभ्यः वेदशास्त्राध्यायिविद्यार्थिजनप्रोत्साहनार्थं विभुविरचिते विभुना महीशूरपुराधीशेन विरचिते आप्तसचिवमुखेन प्रकल्पिते वेदशास्त्रालये वा श्रीमन्महाराज संस्कृतकालेजिति प्रसिद्धमहापाठशालायां वा विचिनु। तत्र संस्कृतविद्याविनोदानुभवार्थं सम्मिलितस्स्यादित्याशयः। महितविभवे मेरुशृङ्गायमाणे च आस्थाने वा विचिनु। तत्र राज्यकार्यपरिपाटीक्रममालोकितुं मि-

लितस्स्यादित्याशयः । तथाचात्र महाराजेन सकलविद्याभिवृद्धये सर्वं सौकर्यं परिकल्प्य साधु विद्या प्रचार्यतइति मुख्योऽर्थः ॥

सन्ध्याकाले त्रिनयनगृहं तत्र वाराहगेहं ।
लक्ष्मीकान्तप्रियगृहमथो कृष्णदेवालयञ्च ॥
दर्शंदर्शं दयितमयि तं साधु साधो! विचिन्वन् ।
मत्कार्यार्थं पुरपरिसरे याहि भद्रं बलाद्रिम् ॥८२॥

सन्ध्येति—अयि साधो मेघराज! तत्र महिशूरपुरे सन्ध्याकाले त्रिनयनस्य त्रिणेत्राह्वयस्य परमेश्वरस्य गृहं देवालयं दर्शंदर्शं सन्ध्याकाले शिवदर्शनस्यावश्यकत्वात्तत्र गतस्स्यादित्याशयः । तं दयितं साधु विचिन्वन्सन् ततो वाराहगेहं अथो लक्ष्मीकान्तस्य भगवतः प्रियगृहमथो कृष्णदेवालयञ्च दर्शंदर्शं पुरपरिसरे विद्यमानं भद्रं मङ्गलप्रदं बलाद्रिं महाबलगिरिं चामुण्डाम्बानिवासाद्रिमिति यावत् । याहि प्रतिपद्यस्व । पर्वतदर्शनकुतूहलेन तत्र गतस्स्यादित्याशयः ॥

तत्र स्थित्वा महिसुरपुरीं वीक्षसे यद्यधस्तात् ।
तत्सौभाग्यं सकलमपि ते नेत्रपात्रं तदा स्यात् ॥
विद्युद्दीपैर्निशि परिवृता या समस्तेपि देहे ।
राज्ञा रत्नाभरणनिकरैर्भूषितेवावभाति ॥८३॥

तत्रेति—हे जलद! त्वं तत्र बलाद्रौ स्थित्वा अधस्तात् विद्यमानां तां उत्तरार्धे यच्छब्दोपात्तां महिसुरपुरीमीक्षसे यदि निशि विद्युद्दीपैः परिवृता या पुरी समस्तेपि देहे राज्ञा कर्त्रा रत्नाभरणनिकरैः भूषितेवावभाति तत्सौभाग्यं तादृक्पुरीसौन्दर्यं सकलमपि तदा पर्वतारोहणकाले ते नेत्रपात्रं स्यात् सामस्त्येन त्वन्नयनगोचरं भवेदित्यर्थः । अत्र देहत्वाध्यवसिततत्तत्प्रदेशस्थितविद्युद्दीपपरिवृतायां पुर्यां राजकर्तृकरत्नाभरणभूषितत्वोत्प्रेक्षया पुर्याः कान्तासादृश्यमभिव्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥

प्रौढध्वान्तच्छलयुतमहापङ्कवद्भूतटाके ।
हेमाम्भोजप्रकररुचिरा भान्ति विद्युत्प्रदीपाः ॥
सोपानानां पथि वलगिरेश्शेषभोगायमानाः ।
शैषे शीर्षे लसति मणिवद्गोपुराग्रप्रदीपः ॥८४॥

प्रौढेति—प्रौढध्वान्तः प्रबलतरान्धकारः तच्छलयुतः यः महापङ्कः तद्वति भूरेव तटाकस्तस्मिन् विद्यमानाः विद्युत्प्रदीपाः हेमाम्भोजप्रकररुचिरास्सन्तो भान्ति ॥ गाढान्धकारवद्भूप्रदेशस्थितविद्युत्प्रदीपाः महापङ्कवत्तटाकस्थितहेमाम्भोजानीव दृश्यन्तइति भावः । किञ्च वलगिरेः सोपानानां पथि निहितास्ते शेषभोगायमानाः वक्राकारविन्यासशोभिनस्सन्तोविभान्ति ॥ गोपुराग्रप्रदीपः गोपुरस्य देव्यगारमहाद्वारोपरि निबद्धसप्तभौमप्रासादस्य अग्रे निहितः महान् विद्युत्प्रदीपः कर्ता । शैषे आदिशेषसम्बन्धिनि शीर्षे उद्धृतफणामण्डले मणिरत्नमहानागरत्नवत् लसति प्रकाशते । बहुदूरस्थैरपि दृश्यत इत्यर्थः । रूपकोपमासंसृष्टिः ॥

चामुण्डाम्बाचरणनलिनन्यासधन्योपकण्ठे ।
राज्ञस्सौधे विचिनु तमथो तत्र देवीतटाके ॥
पीत्वा तस्मिन् जलधर! जलं प्रेरितोगन्धवाहैः ।
श्रीकण्ठेशं कलय कपिलाकौण्डिनीसङ्गमस्थम् ॥८५॥

चामुण्डाम्बेति—तत्र वलाद्रौ चामुण्डाम्बायाश्चरणावेव नलिने चामुण्डाम्बाचरणनलिने इत्यवधारणापूर्वपदसमासः । तयोर्न्यासेन विन्यासेन धन्यमुपकण्ठं यस्य तादृशे राज्ञः महीशूरपुराधीशस्य सौधे विहारमन्दिरे तं मन्नाथं विचिनु मनोविनोदनार्थं मनोज्ञेऽस्मिन् विलासवेश्मनि मिलितस्स्यादिति भावः । अथो देवीतटाके तन्नामनि तत्रत्यजलाशये विचिनु । स्नानपानादिनिमित्तं तत्र मिलितस्स्यादिति भावः । हे जलधर! अथो अनन्तरं तस्मिन्

देवीतटाके जलं पीत्वा गन्धवाहैः तत्रत्यचम्पकगन्धवद्वातैः प्रेरितः प्रणुन्नस्सन् पीतजलस्य ते प्रोद्धृत्य प्रणोदने सौकर्यसूचनार्थं गन्धवाहैरिति बहुवचनम् । कपिलाकौण्डिन्योर्नद्योस्सङ्गमस्थं श्रीकण्ठेशं गरलपुरीक्षेत्राधीशं देवं कलय भज । केवलस्य नलिनस्य चरणात्मनापरिणतिमन्तरा तन्न्यासस्य धन्यताकरणार्थत्वायोगात् परिणामालङ्कारः ॥

तत्र क्षेत्रे तरुणसुदतीदत्तसेवाप्रधूपै ।
स्संवृद्धाङ्गस्स्वयमपि हरागारधूपायमानः ॥
स्तुत्वा देवं स्तनितवचनैः प्रस्रवेणाभिषिञ्चन् ।
विद्युद्दीपावलिमुपहरन् प्रक्रमेथा विमानम् ॥८६॥

तत्रेति—तत्र क्षेत्रे तस्मिन् गरलपुरक्षेत्रे तरुण्यश्च तास्सुदत्यश्च तरुणसुदत्यः स्त्रियाः पुंवत्कर्मधारयेत्यादिना पुंवद्भावः । ताभिर्दत्ताः ये सेवाप्रधूपास्तैः आगन्तृजनान् सम्मोह्य धनाकर्षणार्थं तरुणीभिर्विक्रीय्यमाणसेवाधूपैरित्यर्थः । संवृद्धं अङ्गं यस्य तादृशः धूमरूपे त्वयि धूममेलने वृद्धिरुचितैवेति भावः । किञ्च स्वयमपि हरागारस्य धूपायमानः धूपवदाचरन्सन् देवं श्रीकण्ठेशं स्तनितान्येव वचनानि तैस्तुत्वा प्रस्रवेण जलस्यन्दनेनाभिषिञ्चन्सन् विद्युत एव दीपास्तेषामावलिं दीपमालामिति यावत् । उपहरन्नुपहारीकुर्वंश्च सन्नित्यर्थः । विमानं सप्राकारगोपुरं देवालयं प्रक्रमेथाः प्रदक्षिणीकुर्वित्यर्थः । प्रोपाभ्यां समर्थाभ्यामित्यात्मने पदम् ॥

तस्मिन् क्षेत्रे विलसति मठो राघवेन्द्रार्यक्लृप्तः ।
पारम्पर्यक्रममनुगतैः पाल्यमानो यतीन्द्रैः ॥
नित्यं यस्मिन् निखिलमनुजश्रेयसे त्यक्तकामै ।
र्द्वैताचार्यैर्बुधजननुतैः पूज्यते रामचन्द्रः ॥८७॥

तस्मिन्निति—तस्मिन् क्षेत्रे श्रीकण्ठपुरक्षेत्रे राघवेन्द्रार्यक्लृप्तः मठः श्रीराघवेन्द्रमठइति प्रसिद्धमठः पारम्पर्यक्रममनुगतैः राघवेन्द्राचार्यतच्छिष्यत-

च्छिष्याद्दिपरम्पराप्राप्तैर्यतीन्द्रैः पाल्यमानस्सन् विलसति चिरकालादारभ्य शोभत इत्यर्थः । यस्मिन् राघवेन्द्रमठे नित्यं सदा निखिलमनुजानां शिष्यजनानां श्रेयसे त्यक्तकामैर्वैराग्यशालिभिः बुधजननुतैर्महाविद्वद्भिरित्यर्थः । द्वैताचार्यैः रामचन्द्रः तन्मठगुरवे भगवता प्रसादीकृता राममूर्तिः पूज्यते दिवानिशं समर्च्यत इत्यर्थः ॥

गत्वा तस्माद्गरलपुरतः केरलान् सम्प्रपन्न- ।
स्तत्रानन्ते शयितमनघं पद्मनाभं भजेथाः ॥
तस्मै राज्यप्रभवमखिलं वैभवं सन्निवेद्य ।
प्रीतो भक्त्या नृपतिरवनीं पावयन् पाति तत्र ॥८८॥

गत्वेति—तस्मात्पूर्वोक्तात् गरलपुरतः पञ्चम्यास्तसिः । गत्वा केरलान् केरलदेशं सम्प्रपन्नः प्राप्तस्सन् तत्र केरलदेशे अनन्ते अनन्तशयनाख्यपुरे शेषशय्यायां शयितं शयनसुखमनुभवन्तं अनघं पद्मनाभं तदाख्यमच्युतं देवं भजेथास्सेवेथाः । राजा तद्देशाधिपतिः कर्ता राज्यप्रभवमखिलं वैभवं तस्मै श्रीमदनन्तपद्मनाभाय सन्निवेद्य तदीयत्वेन समर्प्य प्रीतस्सन्तुष्टस्सन् तत्र तद्देशे अवनीं पावयन्सन् भक्त्या पाति राजकर्म करोतीत्यर्थः । अत्र राज्यवैभवस्य दुर्विनियोगपरिहाराय भगवति निवेदनात्प्रीत इति, प्रजाप्रदत्तकराणां भगवत्युपयुक्तत्वात्पावयन्निति च पदप्रयोजनं द्रष्टव्यम् ॥

तस्मिन् देशे कलिरपि मृदुर्बालको वा यदस्मि- ।
न्नद्याप्यास्ते द्विजगुरुसुरप्रीणने भक्तिभावः ॥
स्वाचारातिक्रमविमुखता चास्ति वर्णाश्रमाणा ।
यस्माच्चास्मिन्नुदयति न गोब्राह्मणानां निकारः ॥८९॥

तस्मिन्निति—कलिः कलियुगाभिमानी पापपुरुषः अपीत्यनेन निश्शङ्कमकार्यकरणप्रवर्तकोपीति गम्यते । तादृशोपि कलिपुरुषः तस्मिन् देशे

केरलदेशे मृदुः तीक्ष्णप्रवृत्तिरहितस्सन्नस्तीत्यर्थः । वा अथवा बालकः नातिप्रबलः। कथमेतदित्यत आह, यदिति—यद्यस्मात्कारणात् अद्यापि सर्वत्र कलेरतिविजृम्भणकालेऽपि अस्मिन् केरलदेशे द्विजगुरुसुराणां प्रीणने विषये भक्तिरूपो भावः भक्तिभावः जनानां हृदयाभिप्राय इति यावत्। आस्ते परिलुप्यमानोपि यत्किञ्चिदस्तीत्यर्थः। किञ्च स्वाचारातिक्रमविमुखता स्वेषामाचारः स्नानसन्ध्यादिस्वस्वधर्मः तेषामतिक्रमे विषये विमुखता अन्यत्र ऐदम्पर्येण या प्रवृत्तिस्तदभावः। वर्णाश्रमाशा वर्णो ब्राह्मणादिः आश्रमो ब्रह्मचर्यादिः तयोर्विषये आशा चास्ति। साधु वर्णाश्रमधर्मानुष्ठानाभावेपि तद्विषयकाशा वा तत्रास्ति। अन्यत्र तदाशापि नास्तीत्यर्थः। यस्माच्च कारणात् अस्मिन् केरलदेशे गोब्राह्मणानां निकारस्तिरस्कारः नोदेति तिरस्कारबुद्धिरेव नास्तीत्यर्थः। अत्र नास्तीत्यनेनान्यत्र ब्रह्मद्वेष—ब्राह्मणापमान—गोवधादिरूपस्तिरस्कारः सपरिवारस्ससन्तानश्चास्तीति भावः। अत्र यदिति यस्माच्चेति वाक्यार्थचतुष्टयेन कलेर्मृदुत्वबाल्ययोस्समर्थनात् काव्यलिङ्गमलङ्कारः। तेन च इतरदेशापेक्षया धर्मिष्ठोयं देश इति वस्तुध्वनिः। तेन च सकलदेशविलक्षणोयं देश इति व्यतिरेकालङ्कारध्वनिश्चेति ज्ञेयम् ॥

तत्रासारैस्सकलभुवमासिच्य सिंहावलोक- ।
न्यायात्किञ्चिद्विचलितवपुर्व्योममार्गं विगाह्य ॥
कौर्चीनामाश्रितजनपदे सच्चरित्राणि पश्यन् ।
किञ्चित्पूर्वां दिशमनुसरन् कालटीं याहि साधो ॥९०॥

तत्रेति—हे साधो मेघराज! तत्रानन्तशयने आसारैर्धारासम्पातैः सकलभुवमासिच्य तत्र जलानि प्रवर्ष्येत्यर्थः। सिंहावलोकन्यायात्किञ्चिद्विचलितवपुः सिंहः यथा गच्छन् गम्भीरं प्रतिनिवृत्य पश्यति तद्वत्किञ्चित्प्रतिनिवृत्योत्तरां दिशमनुसरन् सन्नित्यर्थः। व्योममार्गं विगाह्य प्रविश्य गगना-

रूढस्सन्नित्यर्थः । कोचीति नाम यस्य तादृशो आश्रितजनपदे सार्वभौमपरिपालनाधीने कोच्चीनामकदेश इत्यर्थः । सच्चरित्राणि पश्यन्सन् तत्रत्यजनानां सदाचारसम्पन्नत्वादिति भावः । किञ्चित्पूर्वां दिशमनुसरन्सन् कालटीं तन्नामकं श्रीमच्छङ्करभगवत्पादाचार्यजन्मस्थानं याहि ॥

आचार्यत्वं सकलजगतां सार्थयन्नाविरासी-।
त्त्रानादिस्त्रिभुवनगुरुश्शङ्करस्स्वाभिधानात् ॥
मूलाज्ञानाभिधविषतरोर्मूलघातं वितन्वन् ।
चक्रे मोक्षाभिधमणिगृहारोहनिश्रेणिकां यः ॥९१॥

आचार्येति—तत्र कालट्यामग्रहारे न विद्यते आदिरुत्पत्तिर्यस्येत्यनादिरुत्पत्तिशून्य इत्यर्थः । त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य गुरुस्त्रिलोकाधिपतिरित्यर्थः । एतादृशश्शङ्करः परमेश्वरः अन्यत्र नविद्यते आदिराद्यक्षरं यस्य तादृशः त्रिभुवनगुरुः अस्मिन्पदे प्रथमाक्षरपरित्यागे भुवनगुरुरिति शिष्यते, तादृशभुवनगुरुशब्दवाच्य इत्यर्थः । शङ्करः शङ्कर इति नामतोऽर्थतश्च प्रसिद्धः शङ्करभगवत्पादाचार्य इत्यर्थः । स्वाभिधानाच्छङ्कराभिधानात् सकलजगतामाचार्यत्वं नियामकत्वमुपदेष्टृत्वं च सार्थयन् नामधेयानुरूपं कल्पयन्नाविरासीदवातारीदित्यर्थः । मूलाज्ञानं संसारमूलमतस्मिन् तद्बुद्धिरूपाध्यासः तदभिधो यो विषतरुः सकलमोहकत्वाद्विषतरुत्वारोपणं तस्य मूलघातं मूलच्छेदनं अविद्यानिवर्तनमिति यावत् । वितन्वन् सन् मोक्षाभिधस्य मणिगृहस्य आरोहाय मुक्तिप्राप्तये निश्रेणिकां आरोहणसाधनभूतामधिरोहिणीं ब्रह्मसूत्रभाष्यमिति रूपकातिशयोक्तिः । यः चक्रे कृतवान् सतादृशः कालट्यामाविरासीदिति पूर्वेण सम्बन्धः । अत्र मूलाज्ञानमूलघातवितननं प्रति मोक्षसाधनभूतशारीरकाद्वैतभाष्यकरणस्य हेतुत्वकल्पनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार इत्येतेषां रूपकरूपकातिशयोक्तिकाव्यलिङ्गानां त्रयाणां

संसृष्टिः। तया च साक्षात्परमेश्वरावतारः श्रीमच्छङ्करभगवत्पादाचार्यः शारीरकाद्वैतभाष्यकरणेन गाढाज्ञानान्धकारे पतिष्यतो लोकानुद्धरति स्मेति वाक्यार्थरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥

पूर्णां पीत्वा विमलसलिलां पावनीभूय भूयः ।
पाण्ड्यान् गत्वा मधुरमधुरापत्तने पाण्ड्यपुत्रीं ॥
मीनाक्षीं तां प्रणम विनयात्सुन्दरेशोपि यस्या- ।
स्सौभाग्येन त्रिभुवनपदे नित्यसाम्राज्यभोक्ता ॥९२॥

पूर्णामिति——विमलसलिलां पूर्णां तत्रत्यां नदीं पीत्वा भूयः पुनरपि पावनीभूय पूर्वमेव पूर्वोक्तमहानदीपानमहाक्षेत्रदेवतादर्शनादिना पूतत्वाद्भूय इति। ततः पाण्ड्यान् पाण्ड्यदेशं गत्वा मधुरे मनोहरे मधुरापत्तने पाण्ड्यस्य तद्देशाधिपतेः पुत्रीं राजपुत्रीत्वेनावतीर्णां मीनाक्षीं जगज्जननीं विनयात्प्रणम। सुन्दरेशोपि तत्र तदाख्यश्शिवोपि मोक्षप्रदोपीत्यपिशब्दार्थः। यस्याः मीनाक्ष्याः देव्याः सौभाग्येन करग्रहणसामर्थ्येन त्रिभुवनपदे त्रिलोकाधिपत्ये विषये नित्यं कल्पकोटिशतैरप्यपरिहीयमानतया स्थिरं यत्साम्राज्यमेकच्छत्राधिपत्यं तद्भोक्ता भवतीत्यर्थः। तादृशीं मीनाक्षीं प्रणमेति पूर्वेणान्वयः। देव्यास्तादृशं सौभाग्यं प्रदर्शितं च नीलकण्ठविजये——

"यज्जन्मस्थेमभङ्गव्रतमिह जगतां यच्च सर्वान्तरत्वं ।
यत्स्वातन्त्र्यं च मोक्षे श्रुतिषु निगदितं विश्वसाम्राज्यचिह्नं ॥
तद्यस्यास्साहचर्यात्परिणमति परब्रह्मणि श्रीमहेशे ।
तामाद्यामात्मविद्यामहमिति कलयन् सर्वतो निर्वृतोऽस्मि ॥" इति

भूमेर्मालां जलद कृतमालाभिधां प्राप्य सिन्धुं । metre?
प्रस्थाय श्रीपतिपदगिरौ सुन्दरं वीक्ष्य देवम् ॥
गोदां देवीं पथि कृतपदां त्रिः परिक्रम्य यायाः ।
पुण्यं क्षेत्रं रघुपतिरभूद्यत्र दर्भे शयानः ॥९३॥

भूमेरिति--हे जलद! भूमेर्मालां हाररूपां कृतमालामिधां सिन्धुं तत्रत्यनदीं प्राप्य। अत्र कृतमालेति नामपदस्य बह्वक्षरत्वात् न यतिभङ्गशङ्का कार्या। तदुक्तं प्राचीनैः "द्व्यक्षरे यतिभङ्गस्स्यान्नतु बह्वक्षरे पदे" इति। अयमेवार्थः "लक्ष्यलोमलताधारतासमुन्नेयमध्यमा" इत्यत्र ललितासहस्रनामभाष्ये अङ्गीकृतः। प्रस्थाय पुरोगत्वा श्रीपतिपदगिरौ भाषायां तिरुमालिरुशोलै इति प्रसिद्धपर्वते सुन्दरं सुन्दरबाहुं देवं भाषायां अळहर् इति प्रसिद्धं नारायणं वीक्ष्य सभक्तिप्रकर्षं सेवित्वा पथि तन्मार्गे कृतपदां प्राप्तस्थानां गोदां देवीं महालक्ष्मीं त्रिःपरिक्रम्य रघुपतिश्श्रीरामः पुरा यत्र दर्भे शयानोभूत्तत्पुण्यं क्षेत्रं दर्भशयनं यायाः प्राप्नुहि॥

प्रेक्षेथास्तं तदनु सहसा प्रद्रवन्नन्तरिक्षे।
रामोपज्ञं सकलदुरितध्वंसहेतुं च सेतुम्॥
द्वीपं कश्चीद्विपइव गिरिं प्राप्य रामेश्वराख्यं।
देवागारे परिचिनु धनुष्कोटिमध्येऽपि नाथम्॥९४॥

प्रेक्षेथाइति--तदनु दर्भशयनगमनानन्तरं अन्तरिक्षे सहसा वेगेन प्रद्रवन्प्रयान् सन् रामोपज्ञं रामेणोपज्ञायत इति रामोपज्ञं तदीयाद्यज्ञानविषयीभूतं उपज्ञोपक्रमं तदाद्याचिख्यासायामिति समासान्तनपुंसकत्वं। तादृशं किञ्च सकलदुरितध्वंसहेतुम्,

"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति।
सेतुं दृष्ट्वा समुद्रस्य पुनर्जन्म न विद्यते"

इत्यादिप्रमाणसत्त्वादिति भावः। तं तथा लोकशास्त्रप्रसिद्धं सेतुं रामसेतुं प्रेक्षेथाः। अन्तरिक्षे गच्छन्नेव वीक्षेथाः। तद्दर्शनस्य मुख्यत्वादिति भावः। तदनु द्विपो गजः गिरिमिव रामेश्वराख्यं कश्चित् द्वीपमन्तरीपं प्राप्य देवागारे रामेश्वरालये धनुष्कोटिमध्येपि उभयत्रापीत्यर्थः। नाथं मत्प्राणनाथं परिचिनु सर्वत्र परिमार्गयेत्यर्थः॥

मत्प्राणेशं विरहचलितं यत्रकुत्रापि पश्यन् ।
राम सीतामिव स हनुमान् तं प्रियं मां प्रणीय ॥
देशेदेशे सकलजनतां प्रीणयन्नम्बुवर्षै-।
स्सौदामन्या सह विचर ते सन्तु सन्मङ्गलानि ॥९५॥

सर्वमाख्यायेदानीं मङ्गलाशासनपूर्वकं स्ववचनं निगमयति, मदिति— हे प्राणबन्धो मेघराज! विरहचलितं विरहवशाद्बुद्धिभ्रान्तिमासाद्य कुत्रचिद्वसन्तं मत्प्राणेशं यत्रकुत्रापि पश्यन्सन् स प्रसिद्धो हनुमान् सीतां राममिव तं प्रियं मन्नाथं मां प्रणीय मया सह संयोज्येत्यर्थः । देशेदेशे सर्वत्र भूमण्डले सकलजनतां सर्वजनसमूहं ग्रामजनबन्धुभ्यस्तलिति तल्प्रत्ययः । अम्बुवर्षैः प्रीणयन् सन्तोषयन् परोपकारमाचरन् सन्नित्यर्थः । सौदामन्या त्वत्कलत्रभूतया तटिता सह विचर इष्टान् देशान् प्रयाहीत्यर्थः । ते तुभ्यं सन्मङ्गलानि सन्त्विति शुभाशंसनम् । उपमालङ्कारः ॥

श्रुत्वा यक्षीवचननिचयं यक्षराजो दयार्द्र-।
स्तत्प्राणेशं सपदि सुरथेनानयद्रामदुर्गात् ॥
शापह्रासात्प्रमुदितधियौ दम्पती तौ समेतौ ।
गेहे स्वीये पुनरपि पुरेवान्वभूतां सुखानि ॥९६॥

अथ कविर्मेघप्रतिसन्देशप्रयोजनं दर्शयति, श्रुत्वेति—यक्षाणां राजा यक्षराजः कुबेरः कर्ता राजाहस्सखिभ्यष्टजिति टच् । यक्षीवचननिचयं यक्ष्याः कथानायिकायाः रत्नमालायाः वचनानि 'क्षेमीस्वामी' इत्यारभ्य 'मत्प्राणेशं विरहचलितं यत्रकुत्रापि पश्यन्' इत्यन्तानि तेषां निचयं समूहं तन्मध्यवर्तिवाक्यजातमित्यर्थः । श्रुत्वा स्वप्रणिधिमुखेनाकर्ण्य दयार्द्रः दयया स्वभावसिद्धपरदुःखप्रहाणेच्छया आर्द्रः तद्वचनानां दुःखोष्णत्वान्नव-

नीतवद्द्रवीभूतमानस्सन्नित्यर्थः । सपदि तद्दुःखश्रवणोत्तरक्षण इत्यर्थः । तत्प्रा-णेशं कथानायकं चित्रग्रीवं यक्षमित्यर्थः । सुरथेन समीचीनेन स्वकीयरथेन रामदुर्गात् रामगिर्याश्रमात् आनयत् स्वानुचरान् सम्प्रेष्य सगौरवं समहो-त्सवं च आनयामासेत्यर्थः । शापह्रासात् शापस्य वर्षभोग्यस्य ह्रासात् पर-मेश्वरोक्त्या स्वोक्त्या च अष्टने मास्येव परिहृतत्वात्कारणात् प्रमुदितधियौ सन्तुष्टचित्तवृत्ती तौ पूर्वोक्तौ जाया च पतिश्च दम्पती जायायाः जम्भावो दम्भावश्च वक्तव्यइति दम्भावः । समेतौ परस्परसंयुक्तौ सन्तौ स्वीये गेहे पुनरपि भूयोपि पुरेव पूर्ववदेव सुखानि विरहकृद्दुःखानुभवानन्तरप्राप्ततया अतीव हृदयङ्गमान्यमितानि सौख्यान्यन्वभूतां चिरायानुभवन्तावासातामि-त्यर्थः ॥

अत्र प्रबन्धव्यङ्ग्यानि कानि चित्प्रदर्श्यन्ते । तथाहि—शापतापिते यक्षे दूरगतेपि तद्वधूर्नानाविधानि कष्टान्यनुभवन्त्यपि तदानुकूल्यमेव चिन्त-यन्ती तदागमनमेव प्रार्थितवतीत्यनेन स्त्रीणां पतिहिताचरणमेव परमो धर्म इति नीतिर्व्यज्यते । यक्षस्यापराधात्तत्पत्न्यास्तद्बन्धूनां तद्गृहमृगपक्षिवृक्षादीनां च खेदवर्णनेन एकस्यापराधो बहून् सन्तापयेदतो निरपराधो वर्तेतेति विधिर्व्य-ज्यते। यक्षयोश्शापव्याजेन विनाभावं परिकल्प्य बहुधाशङ्कनीयानामपवादा-नां च वर्णनेन दम्पत्योर्बहुकालमसहवासो लोकविरुद्ध इत्यर्थस्सूचितो भवति । प्रियतमाकण्ठे भगवदर्पणीयमालां निबद्ध्य निर्माल्यप्रेषणेन शापप्राप्तया च अतिरागस्स्वयमनर्थकारीति न्यायः प्रदर्शितोभवति । प्रतिसन्देशश्रवणमात्रेण यक्षराट् यक्षमनुजग्राहेत्यनेन अपराधफलमनुभवतामप्यपराधिनां सद्वर्तनश्रव-णात्प्रभवस्सद्यः प्रसीदन्तीति व्यक्तीभवति । यक्षदम्पत्योर्नानाविधानि वियो-गव्यथाविजृम्भणानि वर्णयित्वा मधुरेण समापयेदिति न्यायेन ग्रन्थसमाप्तौ तयोः परस्परसङ्घटनं च प्रदर्श्य प्रबन्धान्तिमश्लोकयोरन्तिमभागे सन्मङ्गल-

नीति सुखानीतिच पदप्रयोगेण यक्षयोरिव श्रोतॄणां पठितॄणां पाठयितॄणां च सन्मङ्गलानि सुखानि च सम्भविष्यन्तीति सूचितं भवतीत्यादि ज्ञेयम् ॥

रथीतरसगोत्रस्य रामनामकवेर्वचः ।
सम्मोदयतु चेतांसि विमत्सरधियां सताम् ॥

इति श्रीमन्महीशूरमहाराज नाल्वडिकृष्णराजास्थान कविरत्नबिरुदाङ्कितेन
तदास्थानमहाविदुषा च मण्डिकल् रामशास्त्रिणा विरचिते
मेघप्रतिसन्देशे द्वितीयस्सर्गः ।

समाप्तोयं ग्रन्थः ।

ॐ तत्सत् ।

